तथा—विंशतिस्थानादिषु देववन्दन मुखवस्त्रिकां विना घटते नवेति, प्रश्नोऽत्रोत्तर—मुख्यवृत्त्या मुखवस्त्रिकां विना देववन्दन न घटते ॥२०३॥

तथा—राजप्रश्नीयोपाङ्गे 'भिलुगानाम पावसमणा परिवसन्ती' त्यत्र श्रवणशब्दस्य कोऽर्थ इति, प्रश्नोऽत्रोत्तर—श्रवणशब्देन पाखण्डिविशेषो ज्ञायते ॥ २०४ ॥

तथा—केचन श्राद्धा पुरा नमस्कारस्तोत्रावचूरिगतपञ्चपदानामानुपूर्वीगुणनं कुर्वन्त आसन्, तेषां च कैश्चिदुपाध्यायैः कैश्चित्पाण्डितैश्च निषेधितमस्ति, प्ररूपितं च—नेदं गुणनं सार्वत्रिकं किंतु कारणे सत्येव गण्यते, मन्त्रादिवत्, खण्डितनमस्कारगुणने चास्ति दूषणमपीत्यत्रार्थे परम गुरूणां वच प्रमाणमिति प्रश्नोऽत्रोत्तर—नमस्कारानुपूर्वीगणनं पञ्चपद्या नवपद्या वा क्रियते, श्राद्धविध्यादावुक्तत्वात्, नात्र कश्चिद्विचार इति। यदुक्तं श्रीमहानिशीथतृतीयाध्ययने 'से भयवं! जहुत्तविणओवहाणेणं पचमंगलमहासुअक्खंधमहिज्जित्ता णं पुव्वाणुपुव्वीए पच्छाणुपुव्वीए अणाणुपुव्वीए सरवमणनाव परिचिअं काऊण'मिति, तथा योगशास्त्राष्टमप्रकाशादौ 'एकेनापि वर्णेन स्मरणस्योक्तत्वा'दिति नात्र कश्चिद्विचार इति ॥२०५॥

## अथ पण्डितकान्हर्षिगणिकृतप्रश्नास्तदुत्तराणि च ।

यथा—उपधानवाहिश्राद्धश्राद्धीनां कल्पदिनपञ्चकमध्ये उत्तरितुं न कल्पते नवेति ! प्रश्नोऽत्रोत्तरं—महत्कारणं विना उत्तरितुं न कल्पते, यदि च तथाविधकारणे उत्तरति तदारम्भवर्जनं करोतीति ॥ २०६ ॥

तथा—पारणादिने वाचना कल्पते नवेति' प्रश्नोऽत्रोत्तर—पारणादिनेऽपि वाचना कल्पत इति ज्ञातमस्तीति ॥ २०७ ॥

तथा—पारणादिनानन्तरमुत्तरितुं कल्पते नवेति' प्रश्नोऽत्रोत्तर—न कल्पते इति ॥ २०८ ॥

तथा—चतुर्भिरङ्गुलैर्वैर्या भूमिं न स्पृशन्तीति यदुच्यते तत्कुत्र स्थल इति प्रसाद्यमिति प्रश्नोऽत्रोत्तरं—महीतले कुत्रापि न स्पृशन्तीति संग्रहणीसूत्रस्यायमभिप्रायः ॥ १९७ ॥

तथा—इदानीं भरते मनुष्याणां तिरश्चां च जातिस्मरणमस्ति न वा ? यदि नास्ति तदा कुतो व्यवच्छिन्न ? तथाऽवधिज्ञानमपीदानीमस्ति नवेत्यपि च प्रसाद्यमिति ? प्रश्नोऽत्रोत्तरं—वर्तमानकाले जातिस्मरणस्यावधिज्ञानस्य च व्यवच्छेद शास्त्रे प्रतिपादितो नास्तीति ॥ १९८ ॥

तथा—त्रयोदशचतुर्दशगुणस्थानयोर्द्विचरमसमयं यावत् षट्संहननसत्ता केन हेतुना ? यतो मोक्षगमनमाद्येनैव भवतीति प्रश्नोऽत्रोत्तर—यद्यपि मोक्षगमनमाद्येनैव भवति तथापि प्राक्तनसंहननानां सत्तासद्भावे को विचार इति ॥ १९९ ॥

# अथ पण्डितविद्याविजयगणिकृतप्रश्नास्तदुत्तराणि च ।

तथा—चैत्राश्विनाऽस्वाध्यायदिनेषु यत्तप कृत स्यात्तत्तपो रोहिण्यालोचनादिषु समेति नवेति प्रश्नोऽत्रोत्तरं—सप्तम्यादिदिनत्रयकृत तप आलोचनायां न गण्यते, रोहिण्यादितपाविधसम्बद्धतपासि तु गण्यते, न तु सर्वत्रेति ॥ २०० ॥

तथा—सूतकगृह साधव आहारार्थं यान्ति नवेति प्रश्नोऽत्रोत्तर—यत्र देशे सूतकगृहे यावद्दिवसैर्ब्राह्मणादयो भिक्षार्थं भ्रमन्ति तत्रात्मभिरपि तथा विधेयमिति वृद्धव्यवहार ॥ २०१ ॥

तथा—छट्ठभत्तिए अट्ठमभत्तं पगिण्हित्ता कोडुम्बिअपुरिसे सद्दावेइ इत्यत्र छट्ठभत्तिए इति का विभक्तिरस्तीति प्रश्नोऽत्रोत्तर—छट्ठभत्तिए इति प्रथमान्तपदं ज्ञायते ॥ २०२ ॥

## अथ पण्डितकुअरविजयगणिकृतप्रश्नस्तदुत्तरं च ।

यथा—मुक्ताफलानि सचित्तान्यचित्तानि वा ? पृथ्वीकायदलान्यप्कायदलानि वेति ? प्रश्नोऽत्रोत्तर–मुक्ताफलान्यचित्तानि, पृथ्वीकाय-रूपाणि च भवन्तीति ॥ २१५ ॥

## अथ पण्डितचारित्रोदयगणिकृतप्रश्नास्तदुत्तराणि च ।

यथा—शाम्बप्रद्युम्नश्रवणौ सार्द्धाष्टकोटिभिस्साधुभिस्सह सिद्धशिखरिणि सिद्धिं प्राप्तौ, तन्नाम्ना साधुद्वयं तु रैवतगिरौ दृश्यते, तथा चैतस्य स्याविस्येतन्निर्णय प्रसाद्य इति ? प्रश्नोऽत्रोत्तरं–सार्द्धाष्टकोटिभि सह तौ शत्रुञ्जये सिद्धिं प्रापतु, यत्तु रैवताचले तन्नाम्ना शिखरद्वयं दृश्यते तत्तु कायोत्सर्गकरणादिनाऽपि भवत्येवेति ॥ २१६ ॥

तथा—जिनालये क्षेत्रपालप्रतिमाया मानने पूजने सिन्दूरचढापन च सम्यक्त्वस्य दूषण लगति नवेति प्रश्नोऽत्रोत्तरं–क्षेत्रपालप्रतिमाया क्षेत्ररक्षाकरत्वेन सिन्दूरतैलचढापने दूषण न लगति, मानने तु सम्यक्त्वस्य दूषण लगति ॥ २१७ ॥

तथा—श्रीकल्पसूत्रे 'पंचहत्थुत्तरे होत्था' इति हस्तोत्तरासु जन्म कथ सम्भवति ? यतो यस्मिन्नक्षत्रे उत्पद्यते तस्मात्त्रयोदशे जन्म भवतीति प्रश्नोऽत्रोत्तर–यस्मिन्नुत्पद्यते तस्मात्त्रयोदशे नक्षत्रे जन्म भवतीत्येवंविधो नियमो ज्ञातो नास्तीति ॥ २१८ ॥

तथा—पौषधपारणानन्तरं अविसेवनेन पौषधस्य दूषणं लगति नवेति ? प्रश्नोऽत्रोत्तरं–पौषधस्य दूषण न लगति, पर पर्व्वतिथिविराधना भवतीति ॥ २१९ ॥

तथा—आत्मीयप्रतिक्रमणविधिस्सम्पूर्ण क मूलसूत्रेऽस्तीति प्रश्नोऽभोत्तर—आवश्यकवृत्त्यावश्यकचूर्ण्यादौ कियान् विधिरुपलभ्यते, कियांस्तु सामाचार्यादाविति ॥ २०९ ॥

तथा—सूर्यग्रहणं यद्भवति तदस्वाध्यायिकं कुत आरभ्य कियद्यावद्भवति ? तथा यौगिकानां कियन्ति प्रवेदनानि न शुद्ध्यन्तीति ? प्रश्नोऽभोत्तर—यत्सूर्यग्रहणं भवति तत आरभ्याहोरात्रं यावदस्वाध्यायिकं, तदनुसारेणैकं प्रवेदनमशुद्धं ज्ञायत इति ॥ २१० ॥

तथा—सप्तदशभेदपूजायां क्रियमाणायां पूर्णां पूजां प्रति स्थालीमध्ये कलशो ध्रियते नवेति ? प्रश्नोऽभोत्तर—पूजां पूजां प्रति स्थालीमध्ये कलशो धरणीय एवंविधो नियमो ज्ञातो नास्ति, यदा यद्वस्तुन पूजा तदा तद्वस्तुमोचनप्रवृत्तिः स्थालीमध्ये दृश्यत इति ॥ २११ ॥

तथा—चतुर्दशीं पूर्णां कृत्वा स्थालीमध्ये प्रदीपं मुक्त्वा ऊर्ध्वस्था गायन्ति ? किं वा प्रदीपाधिकारो नास्तीति ? प्रश्नोऽभोत्तर—चतुर्दशी पूजात पश्चात्स्थालीमध्ये प्रदीपो मुच्यत एवेति नियमो ज्ञातो नास्तीति ॥ २१२ ॥

तथा—तिरश्चोऽस्थि सरसं भवति तस्यास्वाध्यायिका कियत प्रहरान् यावद्भवतीति ? प्रश्नोऽभोत्तरं—तिर्यगस्थि त्रिप्रहराणामुपरि यावत्सरसं तावदस्वाध्यायिका भवतीति ज्ञायते ॥ २१३ ॥

## अथ पण्डितजनानन्दगणिकृतप्रश्नस्तदुत्तर च ।

तथा—आसीसुन्दर्यौ बालब्रह्मचारिण्यौ किं वा कृतोद्वाहिके इति ? प्रश्नोऽभोत्तरं—कृतोद्वाहिके इति ॥ २१४ ॥

## अथ पण्डितकुअरविजयगणिकृतप्रश्नस्तदुत्तर च ।

यथा—मुक्ताफलानि सचित्तान्यचित्तानि वा ? पृथ्वीकायदलान्यप्कायदलानि वेति ? प्रश्नोऽत्रोत्तर-मुक्ताफलान्यचित्तानि, पृथ्वीकायरूपाणि च भवन्तीति ॥ २१५ ॥

## अथ पण्डितचारित्रोदयगणिकृतप्रश्नास्तदुत्तराणि च ।

यथा—शाम्बप्रद्युम्नश्रमणौ सार्द्धाष्टकोटिभिस्साधुभिस्सह सिद्धाचलशिखरे सिद्धिं प्राप्तौ, तन्नाम्ना साधुद्वयं तु रैवतगिरौ दृश्यते, तथा चैक्यं स्यादित्येतन्निर्णय प्रसाद्य इति ? प्रश्नोऽत्रोत्तरं—सार्द्धाष्टकोटिभि सह तौ शत्रुञ्जये सिद्धिं प्रापतु, यत्तु रैवताचले तन्नाम्ना शिखरद्वयं दृश्यते तत्तु कायोत्सर्गकरणादिनाऽपि भवत्येवेति ॥ २१६ ॥

तथा—जिनालये क्षेत्रपालप्रतिमाया मानने पूजने सिन्दूरचटापन च सम्यक्त्वस्य दूषणं लगति नवेति प्रश्नोऽत्रोत्तरं—क्षेत्रपालप्रतिमाया क्षेत्ररक्षाकरत्वेन सिन्दूरतैलचटापने दूषण न लगति, मानने तु सम्यक्त्वस्य दूषणं लगति ॥ २१७ ॥

तथा—श्रीकल्पसूत्रे 'पचहत्थुत्तरे होत्था' इति हस्तोत्तरासु जन्म कथ सम्भवति ? यतो यस्मिन्नक्षत्रे उत्पद्यते तस्मात्त्रयोदशे जन्म भवतीति प्रश्नोऽत्रोत्तरं—यस्मिन्नुत्पद्यते तस्मात्त्रयोदशे नक्षत्रे जन्म भवतीत्येवंविधो नियमो ज्ञातो नास्तीति ॥ २१८ ॥

तथा—पौषधपारणानन्तरं असिसेवनेन पौषधस्य दूषणं लगति नवेति ? प्रश्नोऽत्रोत्तरं—पौषधस्य दूषणं न लगति, परं पर्वतिथिविराधना भवतीति ॥ २१९ ॥

तथा—यावज्जीवं रात्रौ चतुर्विधाहारप्रत्याख्यानवत स्त्रीसेवने भङ्गोऽभङ्गो वेति ' प्रश्नोऽस्योत्तरं—स्त्रीसेवने ओष्ठचुम्बने सति प्रत्याख्यान भङ्गो भवति, नान्यथेति श्राद्धविधिवचनादिति ॥ २२० ॥

तथा—देशावकाशिकं पौषधस्थाने क्रियते, तत्र कः क्रियाविधिः, तथा देशावकाशिकमध्ये पूजास्नात्रादिकं सामायिकं च कर्तुं कल्पते नवेति ' प्रश्नोऽस्योत्तरं—देशावकाशिके ' देसावगासिअं उवभोगपरिभोगं पच्चक्खामी ' त्याद्येवोच्चारविधि तथा स्वचिन्तितानुसारेण पूजास्नात्रादिक सामायिक च क्रियते, न कश्चिदेकान्त इति ॥ २२१ ॥

तथा—यथात्र भरते मेरुदिशि ध्रुवो वर्त्तते तथा महाविदेहैरवते च सोऽस्ति नवा ' तथा जम्बूद्वीपे कति ध्रुवास्सन्तीति ' प्रश्नोऽस्योत्तर—भरतवदन्यत्रापि ध्रुवा सम्भाव्यन्ते, परमेतत्प्रतिपादकान्यक्षराणि तु दृष्टानि न स्मरन्तीति ॥ २२२ ॥

तथा—अष्टाशीतिमहाग्रहाणां सर्व्वतारकाणां च मण्डलानि कति सन्तीति प्रश्नोऽस्योत्तर—यथा चन्द्रसूर्ययोर्मण्डलानां सङ्ख्यादिविचार शास्त्रे उपलभ्यते, न तथा परग्रहाणामपि, तथा तारकाणां मण्डलान्यवस्थितान्येव भवन्ति, न तु चन्द्रसूर्यमण्डलवदनियतानीति ॥ २२३ ॥

तथा—दीपालिकादिपर्व्वणि मुखमक्षिकादिकरणे मिथ्यात्वमारम्भो वेति प्रश्नोऽस्योत्तर—आरम्भो लगतीति ज्ञातमस्ति, न तु मिथ्यात्वमिति ॥ २२४ ॥

तथा—श्राद्धविधावशनादिचतुष्काधिकारे स्त्रियास्सम्भोगे चतुर्विधाहारो न भज्यते, आस्यदीनामोष्ठादिचुम्बने तु भज्यते, द्विधाहारे तदपि कल्पते, अत्र प्रथमस्थाने मुखसङ्गमेऽपीतिपदं नास्ति, तर्हि पृच्छ्यतां आस्यादीनामग्रे मुखसङ्गमे त्रिचतुर्विधाहारप्रत्याख्यानयोर्भङ्गोऽभङ्गो वे (वा कथमेव इ) ति ' प्रश्नोऽस्योत्तरं—आस्यादीनामित्यत्रादिशब्दात्स्त्रिया अपि मुखसङ्गमे भज्यत इति ज्ञायते ॥ २२५ ॥

तथा—अष्टम्यां प्रतिमायां स्वयमारम्भकरणनिषेधोऽस्ति, तत्र सचित्तपुष्पादिभि पूजां करोति नवेति प्रश्नोऽत्रोत्तर—सचित्तपुष्पादिभि पूजा न करोतीति ॥ २२६ ॥

तथा—अशोधितपट्टावल्या चित्रवालगच्छीया श्रीदेवभद्रोपाध्याया इत्युक्तमस्ति शोधिताया तु अस्या चैत्रगच्छीया इति तत्र को हेतुरिति प्रश्नोऽत्रोत्तर—श्रीमुनिसुन्दरसूरिकृतगुर्वावल्यां चैत्रगच्छीया इत्युक्तमस्ति, तेन शोधितायां तथैव लिखितमस्ति, कुत्रचित्तु चित्रवालगच्छीया इत्यपि दृश्यते, परं तदपि चैत्रगच्छस्य नामान्तरमिति सम्भाव्यते ॥ २२७ ॥

तथा—'अट्ठाइज्जेसु दीवसमुद्देसु' त्तिपाठे 'अक्खुयायार' इति 'अक्खयायार' इति वा पाठ कथ्यते इति प्रश्नोऽत्रोत्तर—अक्खुयायार इति पाठ आर्षत्वात् श्रीतातपादैरादिष्टोऽस्तीत्यसावेव पठनीय इति ॥ २२८ ॥

तथा—श्रीस्थूलभद्रस्य यतित्वे वेश्यागृहस्थिति सा सिद्धान्तोक्ता नवा ? यदि सिद्धान्तोक्ता स सिद्धान्तो नामग्राह प्रसाद्य इति प्रश्नोऽत्रोत्तरं—नन्दीसूत्रे पारिणामिक्यां बुद्धौ स्थूलभद्र कार्मिक्यां तु वेश्या सारथिश्च उदाहरणतयोक्तास्सन्ति, एतदर्थप्रतिपादने स्थूलभद्रस्य यतित्वेऽपि वेश्यागृहेऽवस्थानमुक्तमस्तीति ॥ २२९ ॥

तथा—श्रीहेमनेमिचरित्रे कृष्णजरासन्धयुद्धाधिकारे जरामोचनशङ्खेश्वरपार्श्वनाथानयनाधिकार कथं नोक्त ? सोऽधिकार शास्त्रीयो नवेति प्रश्नोऽत्रोत्तरं—तीर्थकल्पादौ सोऽधिकारोऽस्तीति शास्त्रीय एवेति ॥ २३० ॥

तथा—नेमिचरित्रे सर्वसाधूना द्वादशावर्त्तवन्दनं कृष्णो ददौ इत्युक्तमस्ति, न त्वष्टादश सहस्राणामिति तदुक्तिर्लौकिकी शास्त्रीया वेति, यदि शास्त्रीया तदा कथं तदुपपत्ति 'पयट्ठिआणं च तइय तु' इति वचनात्, सर्वेषां च पदस्थत्वाभावात्, यदि सर्वेषा पदस्थत्व तदा ते

कस्मिन्भवे सिध्या इति प्रश्नोऽप्रोत्तर—यथा नेमिचरित्रे तथावश्यकवृत्त्यादावपि सर्वेषां साधूनां द्वादशावर्त्तवन्दनकमुक्तमस्ति, सर्वशब्देन चाष्टादशसहस्रसङ्ख्या समागतैवेति काऽऽशेक्षा ?, किञ्च सर्वेषामिति पदं विवक्षितसर्वपरं, तेन पदस्थानामेव वन्दनकप्रदानं सम्भाव्यते, पदस्थेष्वपि ये गुरुनिकटस्थास्ते कथं तद्दापयन्तीति विचारेण सर्वं समञ्जसमेवेति ॥ २३१ ॥

तथा—श्रीकल्पसूत्रे श्रीनेमेश्चत्वारिंशत्सहस्राण्यार्या उक्तास्सन्ति, नेमिचरित्रे त्वेवं "विना च कनकवतीं, रोहिणीं देवकीं तथा । पत्न्योऽपि प्राव्रजन् स्वामिसन्निधौ सकला अपि" ॥ १ ॥ वसुदेवहिण्ड्यामपि द्वासप्ततिसहस्राण्यपि वसुदेवपत्न्य श्रीनेमिपार्श्वे प्रव्रज्य मोक्षं गता, अन्या अपि सहस्रशः कृष्णादिपत्न्य श्रीनेमिपार्श्वे प्रव्रजितास्सन्तीति कथं सङ्गच्छते ?, तथा सर्वेषामपि तीर्थकृतां श्राद्धश्राद्धीसाधुसाध्वीसंख्या कल्पसूत्रोक्ताऽपि सन्देहमावहतीति प्रश्नोऽप्रोत्तर—तीर्थकृतां पार्श्वे ये सम्यक्त्वलाभपूर्वकं देशविरत्यादि प्रतिपन्ना त एव तीर्थकृत्परिवारमध्ये गमनीया नान्ये इति न कोऽपि शङ्कावकाश इति ॥ २३२ ॥

## अथ पण्डितकीर्तिविजयगणिकृतप्रश्नास्तदुत्तराणि च ।

यथा—केचन जीवा इलिकागत्या भवान्तरं यान्ति, केचन कन्दुकगत्या, तत्र किं निदानमिति प्रश्नोऽप्रोत्तर—ये जीवा देशतो मारणान्तिकसमुद्घातं कुर्वन्ति ते इलिकागत्या भवान्तरं यान्ति, ये च सर्वतो मारणान्तिकसमुद्घातं कुर्वन्ति ते कन्दुकगत्या भवान्तरं यान्तीति श्रीभगवत्यां प्रोक्तमस्ति ॥ २३३ ॥

१ पाठान्तरेऽ—यदा मारणान्तिकसमुद्घातगतो म्रियते तदेलिकागत्योत्पत्तिदेशं प्राप्नोति, तत्र च जीवदेशस्योत्पत्तिदेशे प्राप्तत्वात् देशेन समवहन्तीत्युच्यते । यदा तु मारणान्तिकसमुद्घातात्प्रतिनिवृत्तः सन् म्रियते तदा सर्वप्रदेशसंहरणतो कन्दुकगत्योत्पत्तिदेशं प्राप्तः सर्वेण समवहत इत्युच्यते श० १७–३६

तथा—प्रस्थापितस्वाध्यायद्वयकृतकालद्वयानुष्ठानकृतकालमण्डलद्वयप्रतिक्रान्तवैरात्रिककालस्य स्थण्डिलादिगमने प्रहरातिक्रमे चाऽवशिष्टाऽनुष्ठान सन्ध्यायां कल्पते नवेति प्रश्नोऽत्रोत्तर—प्रभाते सकलक्रियाकरणाऽशक्तो स्वाध्यायद्वय प्रस्थाप्य कालद्वयक्रियां करोति, तदनु एक कालमण्डलं विधायैकं स्वाध्यायं प्रस्थापयति तदनु द्वितीय कालमण्डल कृत्वा वैरात्रिककाल प्रतिक्रामति, तदा सन्ध्यायामवशिष्टानुष्ठानं कर्तुं कल्पते, नान्यथेति योगविधावुक्तमस्ति ॥ २१४ ॥

तथा—योगशास्त्रतृतीयप्रकाशवृत्तौ 'शुचि पुष्पामिषस्तोत्रैर्देवमभ्यर्च्य वेश्मनि' इति १२२ श्लोकव्याख्याने पूर्वं गण्डूषादिकं कृत्वा पश्चात्प्रत्याख्यानं प्रोक्तमस्ति तत्किमिति प्रश्नोऽत्रोत्तरं—योगशास्त्रे शुचिभवनप्रकारो लोकप्रसिद्धोऽनुवादपरतया प्रोक्तोऽस्ति, नत्वयं विधेयतयेति प्रत्याख्यानवतां गण्डूषकरण विनाऽपि देवपूजा शुद्ध्यतीति न कश्चिद्विरोध ॥ २१५ ॥

तथा—"सामाइअपुव्व मिच्छामिठाउकाउसग्गमिच्चाई, सुत्त भणिअ पडिविभमुअकुप्पर धरिअपरिहरणओ" ॥ १ ॥ इति बृहत्प्रतिक्रमणहेतुगर्भगाथामाश्रित्य केचन भविन प्रश्नयन्ति—यत् श्रीमन्त कटिदवरकबन्धनं कुर्वन्ति, तत्कुत्र शास्त्रे प्रोक्तमस्तीति' प्रश्नोऽत्रोत्तर—आवश्यकवृत्तिधर्मरत्नप्रकरणवृत्त्यादौ श्रीआर्यरक्षितसूरिभि स्वपितु कटीदवरको बन्धित इति प्रोक्तमस्ति, तेन तदाचरणया साम्प्रतमपि बध्यत इति वृद्धवादः ॥ २१६ ॥

तथा—प्रथमोपाङ्गे कूणिकवर्णके 'माउपिउसुजाए' एतत्सूत्रवृत्तौ पित्रोर्विनीततया सुपुत्र इत्युक्तं तत्किमिति, प्रश्नोऽत्रोत्तर—कूणिक पित्रोर्विनीत एवास्ति, यत्त्वन्तराले श्रेणिकस्य किञ्चिद्विरूपमाचरितं तन्निदानवशादेव, कथमन्यथा पितृमरणशोकाकुलितो राजगृहं विहाय चम्पाया मुषित इति ॥ २१७ ॥

तथा—" दव्वे सीरदुमाई, जिणभवणाईसु होई सित्तामि । पुण्णातिहिपभिइक्क छे, इत्थुवओगा उ भवेण ॥ १ ॥ " इति श्राद्धजी तचतुपमान्तगाथायाश्चतुर्थपदस्य कोऽर्थ इति प्रश्नोऽत्रोत्तरं—" दव्वे सीरदुमाई, जिणभवणाईसु हाइ सित्तामि । पुण्णातिहिपभिइ काले, सुहाणभोगाइ भावे उ " ॥ १ ॥ इत्ययं भवद्भिः पृष्टाया गाथायाः सम्यक्पाठ बोध्य एतदनुसारेणार्थोऽपि सुगम एवेति ॥ २३८ ॥

तथा—आश्विनमासाऽस्वाध्यायदिनेषु सिद्धान्तगाथापञ्चक पठति, तस्य तत्पठनकल्पते न वेति ? प्रश्नोऽत्रोत्तर—अस्वाध्यायदिनेषु सिद्धान्त सम्बन्ध्येकादिगाथापाठो न शुद्धयतीति ॥ २३९ ॥

तथा—आवश्यकवृहद्वृत्तौ सूत्रकृदङ्गवृत्तौ च " काले प्रसुप्तस्य जनार्दनस्य, मेघान्धकारासु च शर्वरीषु । मिथ्या न भाषामि विशालनेत्रे !, ते प्रत्यया ये प्रथमाक्षरेषु ॥ १ ॥ एतद्वृत्तपदत्रयप्रथमाक्षरै कामेमीति क्रियापदमात्रेण, तत्कथ निष्पद्यते इति ? प्रश्नोऽत्रोत्तर—आवश्यकवृत्त्यादौ काले प्रसुप्तस्येति काव्ये कामेमीति क्रियापदं प्राकृतभाषयाऽवसीयते ॥ २४० ॥

तथा—श्रीविजयदानसूरिप्रसादितसप्तजल्पमध्ये उत्कटोत्सूत्रभाषिणा धर्मकृत्यं न नुमोद्यं, तत्रोत्कटोत्सूत्रभाषिशब्देनात्र विमुच्यते इति प्रश्नोऽत्रोत्तर—उत्कटानुत्कटोत्सूत्रशब्दयोरर्थमाश्रित्य कदापिच्यनिवारणार्थमेव द्वादशजल्पमध्ये द्वितीयजल्पो लिखितोऽस्ति, तेन तदनुसारेण सर्वं बोध्यमिति ॥ २४१ ॥

तथा—पौषधे पारिते सामायिकपारणमुखवस्त्रिकायां प्रतिलिख्यमानायां पञ्चेन्द्रियच्छिन्दने जाते सति पौषधपारणमुखवस्त्रिका पुन प्रति लेखिता विलोक्यते नवा इति प्रश्नोऽत्रोत्तर—पौषधः पुन पारिता विलोक्यते इति ॥ २४२ ॥

तथा—' नवेहिं पीलमो ' इत्यादि उपदेशमालागाथावृत्तौ स्कन्दकुमार पञ्चशतपरिकरो निष्क्रान्त इत्युक्तं, ऋषिमण्डले तु ' ए

गुणे पचसया ' इत्युक्तं तत्कथमिति प्रश्नोऽत्रोत्तरं—उपदेशमालाहत्तौ प्रव्रज्याधिकारे पञ्चशतपरिकरितत्वमुक्तं, ऋषिमण्डले तु निर्वाणाधिकारे एकोनपञ्चशतत्वमिति न कश्चिद्विरोध इति ॥ २४३ ॥

तथा—ज्ञाताधर्मकथाङ्गप्रथमाध्ययने श्रेणिकराजस्य धारिण्या देव्या एक एव मेघकुमारनामा पुत्र प्रोक्त, अनुत्तरौपपातिके तु जालि-कुमारप्रमुखा सप्त सुता उक्तास्तत्कथमिति, प्रश्नोऽत्रोत्तर—श्रेणिकस्य सा धारिणी अन्याऽथवा तस्या एव धारिण्या जालिप्रमुखा सप्त पुत्रा मेघकुमारप्रव्रज्यात पश्चाज्जाता इति सम्भाव्यते ॥ २४४ ॥

तथा—' उम्मुक्कभूसणंगो ' इत्याद्यक्षरानुसारेण पौषधमध्ये श्राद्धानामाभरणमोचनमुक्तमस्ति, साम्प्रतं तु ते परिदधति, तत्कथमिति, प्रश्नोऽत्रोत्तर—उत्सर्गमार्गेण यदि सर्वत पौषधं प्रतिपद्यते, तदा तन्मोचनमेव युक्तं, विभूषाक्षेमादिनिमित्तत्वेन, सामायिके तयोरपि निषिद्धत्वात्, यदि देशत करोति तदा तत्परिधानमपि भवतीति ॥ २४५ ॥

तथा—छम्मुत्तरदोष श्राद्धानां लगति नवा इति, प्रश्नोऽत्रोत्तर—एकोनविंशतिदोषाधिकारे छम्मुत्तरदोषप्रतिषेध कृतो नास्ति, तथाप्य विच्छिन्नपरम्परयौचित्येन च छम्मुत्तरदोषनिवारण न दृश्यते इति ॥ २४६ ॥

तथा—प्रतिष्ठाधिकारे साधूना वासक्षेपाक्षराणि क्व सन्ति ' यदि च सन्ति तदा प्रतिष्ठावत्प्रातिदिनं ते वासक्षेपपूजां कथ न कुर्वन्तीति प्रश्नोऽत्रोत्तर—पञ्चचत्वारिंशदागमानां मध्ये आवश्यकबृहद्वृत्तौ गणधरपदप्रतिष्ठाधिकारे साधूनां वासक्षेपाक्षराणि सन्ति, प्रतिदिन वासक्षेपपूजाक्षराणि तु साधूनां कुत्रापि न सन्तीति तद्विधान कुतस्त्यमिति ॥ २४७ ॥

तथा—क्रियावादिनामक्रियावादिना च मिथ्यादृशा सकामनिर्जरा भवति नवा ' यदि सकामनिर्जरा तर्हि अन्याक्षराणि प्रसाद्यानीति

प्रश्नोऽत्रोत्तरं—क्रियावादिनामक्रियावादिना च केषाञ्चित्सकामनिर्जराऽपि भवतीत्यवसीयते, यतोऽकामनिर्जरावत्तामुत्कर्षतो व्यन्तरेष्वेव बालतपस्विना परकर्षदानां तु प्रसन्नेक यावदुपपात भयमोपाङ्गवाचुक्तोऽस्तीति, तदनुसारेण पूर्वोक्तानां सकामनिर्जरेति तत्त्वम् ॥ २४८ ॥

तथा—कृतसामायिकस्य श्राद्धस्य अपारितेऽपि सामायिके संलग्नसामायिकानि कियन्ति कृतानि शुद्धयन्तीति प्रश्नोऽत्रोत्तर—एतावन्ति सामायिकानि संलग्नानि कृतानि शुद्धयन्तीति एवंविधाक्षराणि शास्त्रे दृष्टानि न स्मृतिपथमायान्ति, यदि च मन स्थाने तिष्ठति तदा यथेच्छ सामायिकानि कर्त्तव्यानि, परं द्वितीयादिसामायिकेषु स्वाध्यायादेशमार्गेण न सम्मान्यत इति वृद्धवाद, परं सामायिकात्सामायिकान्तरकरण शरीरचिन्ताद्युपयोगं विधायैवेति ॥ २४९ ॥

तथा—'तस्स णं अज्जगस्स नत्तुए होत्था इत्थ कते' इति, राजप्रश्नीयोपाङ्गे प्रदेशी आर्यकनप्तृक उक्त, श्राद्धविधिवृत्तौ तु आर्यकसुत कथं प्रोक्त इति, प्रश्नोऽत्रोत्तर—पुत्रपुत्रोऽप्यतीवचल्लभत्वात्पुत्रत्वेन लोकैर्न्यवह्रियते तेनात्रापि नप्तृशब्द पुत्रत्वेन व्यवहृत सम्भाव्यते ॥ २५० ॥

तथा—राजकुमुत्पा गार्हस्थ्ये पिशिताशन कुर्वन्ति नवेति प्रश्नोऽत्रोत्तरं—तीर्थकृता पिशिताशनं सर्वथा न भवति, अन्येषामपि प्रायो न भवतीति ज्ञायते ॥ २५१ ॥

तथा—"पिम मोटा अवगुण सांभळे, जिम निशिभोजनकरतां टळे, जीव हणइ जे भव छगवइ, तेह पाप एक सरसो सवि" ॥ १ ॥ इत्यादि बहुर्क रात्रिभोजनचतुष्पद्यां, तत्किं मान्यं नवा इति प्रश्नोऽत्रोत्तर—केवलिनिषिद्धत्वेन अनेकजन्तुघातहेतुत्वेन च तद्वर्जनीयमेव, यत्तु चतुष्पद्यामुक्तं वस्तु लौकिक वर्त्तते, तदप्यनर्थभयरूपतया कथञ्चित् मान्यमेवेति ॥ २५२ ॥

तथा—श्रीविमलनाथप्रपौत्रश्रीधर्मघोषस्थविरपार्श्वे प्रव्रज्य महाबलकुमारः पञ्चमकल्पे दशाब्धिस्थितिमनुपाल्यानन्तरं श्रीवीरपार्श्वे प्रव्रज्य

तथा सति श्रीविमलनाथश्रीवीरयोः श्रीकल्पसूत्रादिग्रन्थे महदन्तरं दृश्यते तत्कथमिति
सिद्ध इति भगवत्येकादशशतैकादशोद्देशकप्रान्तोक्तं, तथा सति ... तेन कल्पसूत्रोक्तकालमानमाश्रित्य न कापि अनुपपत्तिरिति ॥२९३॥
प्रश्नोऽत्रोत्तरं—भगवतीवृत्तौ द्वितीयव्याख्याने प्रपौत्रके शिष्यसन्ताने इत्युक्तमस्ति, तेन कल्पसूत्रोक्तकालमानमाश्रित्य न काऽप्यनुपपत्तिरिति ॥२९३॥

तथा—नन्दीवृत्तौ ११ पत्रे ' सित्तोगाहण ' गाथाविचारे बुद्धद्वारे सर्वस्तोकाः स्वयम्बुद्धसिद्धास्तेभ्योऽपि प्रत्येकबुद्धसिद्धा सङ्ख्येय-
गुणास्तेभ्योऽपि बुद्धिबोधितासिद्धाः सङ्ख्येयगुणास्तत्कथं ' यतो बुद्धिबोधिताना केवलश्राद्धसमाप्ते व्याख्यानस्य दशवैकालिकवृत्त्यादौ निषेध
दर्शनादिति प्रश्नोऽत्रोत्तर—बुद्धिशब्देन तीर्थकर्यं सामान्यसाध्व्यश्चोच्यन्ते, तत्र तीर्थकरीणामुपदेशे विचार एव नास्ति, सामान्यसाध्वीनां तु
यद्यपि केवलश्राद्धाना पुरस्तादुपदेशनिषेध, तथापि श्राद्धीमिश्रिताना कारणे केवलानां च पुरस्तादुपदेश सम्भवत्यपीति न काप्यनुप
पत्तिरिति ॥ २९४ ॥

तथा—" काऊण सामईयं इरिअं पडिक्कमिय गमणमालोए । वंदित्तु सूरिमाई, सज्झायावस्सय कुणई " ॥ १ ॥ श्राद्धदिनकृत्य
१२१ गाथायाः कोऽर्थ इति प्रश्नोऽत्रोत्तर—गाथाया अर्थो वृत्तौ सुप्रसिद्ध एव, यत्तु सूत्रपाठमात्रेण सामायिकानन्तरमैर्यापथिकीप्रतिक्रमण
प्रतिभाति तत्र सविस्तराण्यावश्यकचूर्ण्यक्षराण्यनुसरणीयानि, येन संशयापनोदो भवति, सर्वेषामेवविधपाठानां तन्मूलकत्वादिति ज्ञायते ॥ २९५ ॥

तथा—सूत्रकृदङ्गप्रथमश्रुतस्कन्धचतुर्थाध्ययनवृत्तौ " छिन्नपादभुजस्कन्धाश्छिन्नकर्णोष्ठनासिका । छिन्नतालुशिरोमेण्ढ्रा, भिन्नाक्षि
हृदयोदरा ॥ १ ॥ " इत्युक्त, तत्र नारकाणां नपुंसकत्वे छिन्नमेण्ढ्रा इति कथमिति प्रश्नोऽत्रोत्तरं—नारकाणां नपुंसकत्वेऽपि मेण्ढ्रसत्ता न
विरुध्यते, ' महिलासहावो सर वण्णभेओ, मिंढ महंतं मउआ य वाणी ' इत्यादिलक्षणस्य पुष्पमालादावुक्तत्वादिति ॥ २९६ ॥

तथा—हैमपद्मचरित्रे रामकेवलिवचनाच्चतुर्थनरकस्थरावणशम्बुकाभ्या युध्यमानं परमाधार्मिककदर्थितं लक्ष्मणं दृष्ट्वा सीतेन्द्रस्तत्र गत्वा

किंचिदूनं न्यपेक्षयदित्युक्त, तत्र चतुर्थनरके सीतेन्द्रगमनं परमाधार्मिककदर्थनं च कथं सङ्गच्छते, ' सहसारंतिय देवा नारयनेहेण जांति तइयभुवं । निग्ग परमाहम्मिअकयावि० इति पञ्चसङ्ग्रहसङ्ग्रहण्यो प्रामाण्यादिति प्रश्नोऽत्रोत्तर—' निग्ग परमाहम्मिअ कयावी ' ति संग्रहणीवचनस्य प्रायिकत्वाच्चतुर्थपृथिव्यां रावणादेः परमाधार्मिककृताऽपि वेदना सम्भवतीति न विरोध, ' सहसारन्तिय ' त्ति पञ्चसङ्ग्रहगाथामाश्रित्य तु पञ्चसंग्रहपुस्तकमत्र हस्तप्राप्यं नास्तीति प्रत्युत्तरं न लिखितं, तेन तत्समयान्तरे ज्ञास्यत इति ॥ २१७ ॥

तथा—द्रव्यलिङ्गिद्रव्यनिष्पन्नचैत्यमविधिचैत्यमित्यागमोक्तिः, पुस्तकादिलेखेषु तद्द्रव्यव्यापारणं युक्तमयुक्तं वा ' यदि युक्तं तर्हि चैत्ये कथमयुक्तं ? तदर्पितं पुस्तकं सुविहितैः कथं गृह्यते इति, तथा कैश्चिच्चिरन्तनाचार्यैः शिथिलपथमपास्य स्वद्रव्यानीतमुक्ताफलपटलं छेदुना चूर्णीकृतं उग्रविहाराङ्गीकारसमये, यदि तद्द्रव्यं पुस्तकादिषु कल्पनीयमभविष्यत्तदा मुक्ताफलचूर्णनेन तद्द्रव्यविनाशनं नाकरिष्यदिति प्रश्नोऽत्रोत्तरं—चैत्यमाश्रित्य विध्यविधिविचारः शास्त्रेषु प्रोक्तोऽस्ति, न तु पुस्तकमाश्रित्य, तेन न तयोः साम्यम्, तत एव च परम्परयापि तत्पुस्तकं गृह्यमाणमस्तीति न काऽप्यनुपपत्तिः । यच्च कैश्चिच्चिरन्तनदर्शनिभिः सुविहितमार्गाङ्गीकारे मुक्ताफलानि छेदुना चूर्णीकृतानि तदु वैराग्यवत्ताख्यापनार्थमिति न काऽप्यनुपपत्तिरिति ॥ २१८ ॥

तथा—चतुःसहस्रभूपैस्सह श्रीनाभेयजिनो दीक्षां जग्राह, तेषां दीक्षोच्चारः केन कारित इति प्रश्नोऽत्रोत्तर—तेऽपि श्रीप्रथमजिनेन सह प्रभुवत् स्वयं जगृहुरिति ज्ञायमचरित्राद्यौ ॥ २१९ ॥

तथा—वन्दारुवृत्तौ ' सिद्धे भो ! पयओ० ' सूत्रव्याख्याने त्रिकोटिपरिशुद्धत्वेन प्रख्यातायेत्यत्र त्रिकोटिशब्दस्य कोऽर्थः इति प्रश्नोऽत्रोत्तर—सूत्रा१ऽर्थ२तदुभय३रूपा कष १ च्छेद २ तापलक्षण ३ परीक्षात्रयरूपा वा तिस्रः कोट्यः सम्भाव्यन्ते ॥ २१० ॥

तथा—चन्दनकनिर्युक्तौ 'वेविंद राय' इत्यादिगाथाया गिहवइसागारिशब्दयोर्लघुवृत्तौ व्याख्यान नास्ति, बृहद्वृत्तौ किं व्याख्यानमस्ति नवा इति प्रश्नोऽत्रोत्तरं—बृहद्वृत्तौ तद्व्याख्यानं नास्ति, परं भगवतीषोडशशतकद्वितीयोद्देशकवृत्तौ गृहपतिशब्देन माण्डलिको राजा सागारिकशब्देन च सामान्यगृहस्थश्च प्रोक्तोऽस्तीति ॥ २११ ॥

तथा—किरणावल्यां दशमसमाधिकारे 'विनुहेहिं अलकितो' त्ति पाठ, आवश्यकवृत्तौ तु अन्यत्, तत्किरणावल्यां कुतस्तच्छिसनमिति व्यक्त्या प्रसाद्यमिति प्रश्नोऽत्रोत्तर—आवश्यकबृहद्वृत्तौ 'पउमसरो विउधपंकओ' इति पाठोऽस्ति, तस्यार्थो विबुधपङ्कजं पद्मसर, तथा किरणावल्यां 'विबुहेहिं अलकिओ' त्ति पाठ कल्पचूर्णितः कृतश्चित्वन्तर्वाच्यतो वा लिखितो भविष्यतीति सम्भाव्यते इति ॥ २१२ ॥

## अथ पण्डितधनहर्षगणिकृतप्रश्नास्तदुत्तराणि च ।

यथा—सुधर्म्मसुरस्वपदव्यपेक्षया यथा ईशानसुरस्वपदवी अधिका, तथा भुवनपतिज्योतिष्कव्यन्तराणामन्योऽन्य का पदवी न्यूना का च अधिकेति प्रश्नोऽत्रोत्तरं—व्यन्तरज्योतिष्कभवनपतीनां यथोत्तर बाहुल्येन महर्द्धिकत्वमिति पदव्यधिकताऽपि तथैवेति ॥ २१३ ॥

तथा—गङ्गादिनदीजलं यथा लवणाब्धौ विश्राम्यति, तथा मानुषोत्तरपर्वतसम्मुखविनिर्गतनदीजलमपि कुत्र विश्राम्यतीति प्रश्नोऽत्रोत्तरं—मानुषोत्तराभिमुखनिर्गतनदीजल पुष्करवरसमुद्रे विश्राम्यतीति स्थानाङ्गादावस्तीति ॥ २१४ ॥

तथा—अष्टोत्तरीयस्नात्रे क्रियमाणे कलधौतिका आद्या जघन्यत उत्कृष्टतश्च कियन्तो गृह्यन्ते इति, प्रश्नोऽत्रोत्तरं—जघन्यतोऽष्टौ आद्या कलधौतिकास्तिष्ठन्ति, उत्कर्षतस्तु यथेच्छमिति ॥ २१५ ॥

तथा—जिनमन्दिरादावधोत्तरीयस्नात्रे विधीयमाने श्रीक्षितुं गातुं नर्तुं श्राद्धय आयान्ति नवेति प्रश्नोऽत्रोत्तरं—गानार्थं श्राद्धय विष्ठन्ति अष्टोत्तरीयस्नात्रविधिपत्रेषु तथा लिखितत्वादिति ॥ २६६ ॥

तथा—कस्यापि श्राद्धस्य द्वादशव्रतसम्बन्धिनी चतुष्पथ्यादिरूपा नोकि कृत्वा दत्ता भवति, तदन्तर्गत प्रथमव्रताधिकारविशेष उपधि-मुखवस्त्रिकाप्रतिलेखनानन्तरं क्रियमाणे स्वाध्याये कस्यापि वक्तुं कल्पते नवेति प्रश्नोऽत्रोत्तरं—प्रतिलेखनास्वाध्यायसमये गाथापद्यकादि वक्तुं कल्पते इति ॥ २६७ ॥

तथा—चम्पकादिपुष्पवासितवारि सकलार्द्रवस्तुप्रत्याख्यानवत श्राद्धस्य पातुं कल्पते नवा इति प्रश्नोऽत्रोत्तर—सकलार्द्रप्रत्याख्यानवतस्त-द्वारि कल्पते पातुमिति ॥ २६८ ॥

तथा—चतुर्मासाष्टाह्निका चतुर्दशी यावत्पूर्णिमां यावद्वा गणनायेति प्रश्नोऽत्रोत्तरं—चतुर्मासाष्टाह्निका साम्प्रतं चतुर्दशी यावद्गणनीया, पूर्णिमा तु पर्वतिथित्वेनाराध्या एवेति ॥ २६९ ॥

तथा—चैत्राश्विनाष्टाह्निकामध्ये पूर्णिमा गण्यते नवा इति प्रश्नोऽत्रोत्तर—चैत्राश्विनाष्टाह्निकामध्ये पूर्णिमा गण्यते ॥ २७० ॥

तथा—" कीडी पूअक्षभो, कुंथु उद्देहि धीमिल्ल, इल्ली मकुण मुआ, खुदही जूया य गद्दहिआ ॥ १ ॥ " इत्याराधनापताका-गाथायां चूडेलमति प्रसिद्धो जीवविशेषस्त्रीन्द्रियजीवमध्ये प्रोक्तो दृश्यते, ' बेइदिअमाइवाहाई ' इति जीवविचारद्वीन्द्रियगाथापान्ते माइवाहा पदेन चूडेलि इत्यर्थ श्रुतोऽस्ति तेन किं प्रमाणमिति प्रश्नोऽत्रोत्तर—चूडेलिविषये मतान्तरमवसेयं, मतान्तरविषये च न व्यामोह इति ॥ २७१ ॥

इति प्रश्नोऽप्रोत्तरं—पूर्वं विवक्षितवेलाकृत

तथा—सरुजः पुंसो यत्त्रिविधाहारनिषेधरूपं सागारिकमनशन कार्यते तदुच्चारविधि कथं इति प्रश्नोऽप्रोत्तरं—पूर्वं विवक्षितवेलाकृत

सरुजः पुंसो यत्त्रिविधाहारनिषेधरूपं सागारिकमनशन कार्यते तदुच्चारविधि कथं इति ॥ २७२ ॥

त्रिविधाहारचतुर्विधाहारप्रत्याख्यानस्य पुंस 'भइ मे हुज्ज पमाओ' इति गाथोच्चारपूर्वकं सागारिकमनशन कार्यत इति ॥ २७२ ॥

तथा—सूक्ष्मनिगोदान्निर्गतो जीव पुन सूक्ष्मनिगोदमध्ये याति नवा इति प्रश्नोऽप्रोत्तर—सूक्ष्मनिगोदान्निर्गतो जीव पुनरपि सूक्ष्मनिगोदे यातीति ॥ २७३ ॥

तथा—उपाश्रये समागच्छन् मुत्कल श्राद्ध निसीहीति तस्मान्निर्गच्छंश्च आवस्सहीति वक्ति नवा इति प्रश्नोऽप्रोत्तर—मुत्कल श्राद्ध निसीहीति वक्ति न त्वावश्यकीति ॥ २७४ ॥

तथा—जिनमन्दिरान्निर्गच्छद्भि साधुभि श्राद्धैश्च आवस्सहीति वक्तव्यं नवा इति प्रश्नोऽप्रोत्तरम्—आवस्सहीति साधुभिर्वक्तव्य न तु श्राद्धैरिति ॥ २७५ ॥

तथा—अणिमाद्या अष्टौ महासिद्धय कस्यां लब्धावन्तर्भवन्ति, महामतिना अणुमतिनां मिथ्यादृशां वा ता सम्भवन्ति नवा इति प्रश्नोऽप्रोत्तरम्—अणिमाद्यो वैक्रियलब्धावन्तर्भवन्ति तास्चासम्यग्दृशां सम्यग्दृशां वा सम्भवन्तीति ॥ २७६ ॥

तथा—श्रीवीरतीर्थङ्करे देशनां दत्त्वा देवच्छन्दान्त प्राप्ते सति एकादशगणधरमध्याद् ज्येष्ठत्वाद्गौतम एव धर्मदेशनां ददाति, पट्टधारित्वेन स्थापितत्वात् सुधर्मस्वामी वा ? अन्यो वा य कश्चिद्गणधरो वा इति प्रश्नोऽप्रोत्तरं—दीक्षया ज्येष्ठत्वात्सति गौतमस्वामिनि गौतमस्वाम्येव धर्मदेशनां विधत्ते, असति च तस्मिन्नन्योऽपि यो ज्येष्ठो भवति स विधत्ते इति ॥ २७७ ॥

तथा—श्रीजम्बूप्रभवस्वामिभ्यां सार्द्धं तपस्या गृहीता, श्रीजम्बूस्वामिनश्च सर्वायुरशीतिवर्षाणि, श्रीप्रभवस्वामिनस्तु सर्वायु पञ्चाशीतिवर्षाणि,

सह दीक्षासमयग्रहणे १० त्रिंशद्वर्षीय इति जम्बूस्वामिनि सत्येव प्रभवस्वामिन स्वर्गमाक्त्वं सम्पनीपद्येत, तेनैतत् पद्यानर्थागतं छल्पकं कथं मिल्तीति प्रश्नोऽत्रोत्तरं—श्रीजम्बूस्वामिदीक्षानन्तर कियद्भिर्वर्षै श्रीप्रभवस्वामिनो दीक्षा सम्भाव्यते, तथा च सति न कोऽपि विरोधो, यदुक्तं परिशिष्टपर्व्वणि—" पञ्चम श्रीगणधरोप्येवमभ्यर्थितस्तदा । तस्मै सपरिवाराय, ददौ दीक्षा यथाविधि ॥ १ ॥ पितृनापृच्छ्य चान्येद्यु , प्रभवोऽपि समागत । जम्बूकुमारमनुयान्, परिमज्यामुपाददे ॥ २ ॥ " २७८ ॥

तथा—आकाशप्रदेशपरमाणवो कतम सूक्ष्म इति प्रश्नोऽत्रोत्तर—प्रदेशापेक्षया द्वयोस्तुल्यत्वमेव, विभागाभावात्, अवगाहनापेक्षया त्वेक स्मिन्नप्याकाशप्रदेशेऽनन्ताः परमाणवोऽवगाहन्त इति विशेषो भावनीय ॥ २७९ ॥

तथा—प्रवचनसारोद्धारवृत्त्यादौ इन्द्रियविषयप्रमाणता आत्माङ्गुलेन प्रोक्ताऽस्ति, चक्षुष उत्कृष्टविषयतायां लक्षयोजनरूपो विष्णुकुमारो दृष्टान्त प्रोक्तोऽस्ति, तथाहि चक्षु सातिरेकयोजनलक्षाद्रूपं गृह्णाति, सातिरेकत्वं तु विष्णुकुमारादय स्वपदपुर स्थितं गर्त्तादिकं तन्मध्यगतं च देवादिकं पश्यन्तीति नयसत्त्वमहावपूर्णावस्ति, इति चक्षुष सातिरेकलक्षयोजनदूरस्वरूपग्रहणविषये दृष्टान्तकरणाद्विष्णुकुमारविकुर्वित रूपमात्माङ्गुलेन सम्भाव्यते, अन्यथा न दृष्टान्तसङ्गतिरित्येवं सति प्रश्नोत्तरसमुच्चयचतुर्थप्रकाशप्रान्ते यद्विष्णुकुमारविकुर्वितरूपमुत्सेधाङ्गुलेनैकलक्षयोजनप्रमाणमुक्तमस्ति तत्कथमिति प्रश्नोऽत्रोत्तरं—विष्णुकुमारकृतं सातिरेकलक्षयोजनप्रमाणरूपं चमरेन्द्रादिवत्प्रमाणाङ्गुलेनापि सम्भवतीति न क्वापि विप्रतिपत्ति, यच्च प्रश्नोत्तरे उत्सेधाङ्गुलेन प्रोक्तमस्ति तत्र किञ्चिद्विधेयमस्तीति ॥ २८० ॥

तथा—इच्छामि खमासमणो० भगवन् ह आचार्याह इत्यादि ४ चतुःक्षमाश्रमणानां प्रथमक्षमाश्रमणे भगवन्० अत्र भगवच्छब्देन किं वाच्यं ? कश्चित्सुधर्मस्वामिनं वक्ति, कश्चिच्च मण्डलीस्वामिन गीतार्थं वक्ति, कश्चित्तु तीर्थङ्करं ब्रूते 'च्यारे खमासमणे अरिहन्तादिक वांदइ' इति

भगवच्छब्देन चत्वारोऽर्था प्रोक्ता सन्ति, तेन भगवच्छब्देन किमत्र वाच्य मिति प्रश्नोऽत्रोत्तरं—भगवच्छब्देन पारम्पर्येण धर्माचार्य श्रूयते, यच्च प्रतिक्रमणहेतुगर्भबालावबोधे छिखितमस्ति, लघुप्रतिक्रमणहेतुगर्भे प्रतिक्रमणहेतुगर्भबालावबोधे ' च्यारे खमासमणे अरिहंतादिक थादइ ' इत्युक्तमस्ति तत्र स बालावबोध केन कृत इति ज्ञापनीयं तदनु ज्ञास्यत इति ॥ २८१ ॥

तथा—जिनमन्दिरे मूलनायकस्य दृष्टिर्द्वारशाखाया कियत्तमे भागे समानेया ? विवेकविलासादौ कथमस्तीति प्रश्नोऽत्रोत्तर—यदुक्तं विवेकविलासे—" द्वारशाखाष्टभिर्भागैरध पक्षाद्विधीयते । मुक्त्वाऽष्टमं विभाग च, यो भाग सप्तम पुन ॥ १ ॥ तस्यापि सप्तमे भागे, गजात्र स्तत्र सम्भवेत्। प्रासादप्रतिमादृष्टिर्नियोज्या तत्र शिल्पिभि ॥ २ ॥ अष्टभागीकृताया द्वारशाखाया य सप्तमो भाग सोऽप्यष्टभागीक्रियते तस्य सप्तमे भागे प्रतिमादृष्टिरानीयत इत्यवसेयमिति ॥ २८२ ॥

तथा—जिनमन्दिरे भ्रमन्त्या देहरी इत्यपरपर्याया देवकुलिकाश्चयोर्विंशतिश्चतुर्विंशतिर्वा कार्या, मूलनायकेन सह चतुर्विंशतिर्भायते तेन त्रयोविंशतिरेव तत्र कार्या इति कश्चित्तेन किमत्र प्रमाणमिति प्रश्नोऽत्रोत्तर—मूलनायकात्पृथक् चतुर्विंशतिर्देवकुलिका क्रियन्ते इत्यत्रत्या सूत्रधारा वदन्तीति ॥ २८३ ॥

तथा—चतुर्निकायदेवानामेकैका कोटिरिति चतस्र कोट्यस्तीर्थकृत्पार्श्वे जघन्यतो भवन्ति समुदितानां एका कोटिरिति वा कथमस्तीति प्रसाद्य ? चतुष्कोट्यक्षराणि वीतरागस्तवचूर्णौ सन्तीति कश्चिद्वक्ति तत्प्रमाणं न वा इति प्रश्नोऽत्रोत्तरं—चतुर्निकायदेवाना समुदितानां कोटि-र्ज्ञायते, नाममालादौ तथोक्ते, यत्र च प्रतिदेवनिकायं कोटिरुक्ताऽस्ति सा का वीतरागस्तववृत्ति. केन च कृतेति ज्ञापनीयं ततो ज्ञास्यत इति ॥ २८४ ॥

तथा—जिनसमवसरणे सङ्ख्याता सुरा मान्त्यसङ्ख्याता वा इति ? प्रश्नोऽत्रोत्तर—जिनसमवसरणेऽसङ्ख्याता सुरनरादयो मान्तीति योगशास्त्रवृत्तौ प्रोक्तमस्ति, न च तत्र काप्यनुपपत्ति, यच्च नाममालादौ क्वापि कोट्यकोटिरुक्ता, तद्विशेषाऽविवक्षयेत्यवसीयते इति ॥ २८५ ॥

तथा—सांवत्सरिकप्रतिक्रमणकायोत्सर्गे ४० चत्वारिंशल्लोकोद्योतकरान् कथयित्वा तत्प्रान्ते एको नमस्कारो वक्तव्य पश्चात् कायोत्सर्गं पारणीय कश्चिदिति वक्ति, कश्चिच्च प्रान्ते नमस्कारं वक्तव्यं न ब्रूते, तेन किं प्रमाणमिति ? प्रश्नोऽत्रोत्तरं—सांवत्सरिकप्रतिक्रमणे सनमस्कारचत्वारिंशल्लोकोद्योतकरकायोत्सर्गे प्रतिक्रमणहेतुगर्भादावुक्तोऽस्ति, पारम्पर्येणापि तथैव क्रियत इति ॥ २८६ ॥

यथा—सागारिके सति रजोहरणेन पदो प्रमार्जने प्रमार्जनाऽसंयम इत्युक्तमस्ति, तत्र को हेतुरिति प्रश्नोऽत्रोत्तरं—अपरिणतलोकोपहासादिहेतुरवसेय इति ॥ २८७ ॥

तथा—अर्हदादिविंशति २० पदाराधनं यश्चतुर्थतपसा करोति, स तद्ध्येयपदगणनमुपवासदिने कुर्यात् दिनत्रयेऽपि वा इति प्रश्नोऽत्रोत्तर—यश्चतुर्थतपसा स्थानकाराधनं करोति स यदि पृथक् पृथक् चतुर्थान् करोति तदा त्रिष्वपि दिनेषु ध्येयपद गणयति, समुदितचतुर्थकरणे तु यथासम्भवमिति बोध्यम् ॥ २८८ ॥

तथा—इहैके सत्त्वाः पृथ्वी नानाविधयोनिक स्वकृतकर्मवशागाः त्रसस्थावरशरीरेषु सचित्ताऽचित्तेषु पृथ्वीकायत्वेनोत्पद्यन्ते, यथा शिरःसु मणय करिदन्तेषु मौक्तिकानि विकलेन्द्रियेष्वपि शुक्त्यादिषु मौक्तिकानि स्थावरेष्वपि वारकादिषु जीवा रत्नभावेनोत्पद्यन्ते, एतान्यक्षराणि सूत्रकृताङ्गदीपिकायां सन्तीत्युक्त्वा मौक्तिकानि सचित्तानि खरतरा कथयन्त सन्ति, प्रश्नोत्तरग्रन्थे तु अचित्तानि तानि भवन्तीत्युक्तमस्ति, तत्कथमिति प्रश्नोऽत्रोत्तरं—सूत्रकृताङ्गदीपिकादौ मौक्तिकानि यद्यपि सचित्तत्वेनोत्पद्यन्ते इत्युक्तमस्ति, तथापि तान्यनुयोगद्वारादौ अचि-

सत्वेनोक्तानि, तेनोत्पत्तिस्थाने तानि सचित्तानि, तन्निर्गतानि चाचित्तानीति बहुश्रुता, ये च सर्व्वदा तेषां सचित्तत्वं वदन्ति तेषां श्राद्धयाविहस्तेन विहरणायमसङ्ग ॥ २८९ ॥

तथा—" मायमयसुभगाईनिच्छुवा " इत्यादिसूतकशब्द प्रत्येक सम्बद्ध्यते, मातकसूतक नाम जन्मानन्तर दशाहानि यावत् मृतसूतकं मृतानन्तरं दश दिवसान् यावत्तत्र यद्वर्ज्यं तद्द्विधा—' लोग ' त्ति लौकिक ' उत्तर ' त्ति लोकोत्तर, लौकिकं द्विधा—इत्वर यावत्कथिकं च, तत्रेत्वरं यत्सूतकमृतकादि, तथाहि—लोके सूतकादि दश दिवसान् यावद्वर्ज्यत इति, यावत्कथिकं च वरुडछिम्पकचर्मकारडोम्बादि, एतान्यक्षराणि व्यवहारसूत्रवृत्तौ सन्तीत्युक्त्वा सूतकगृह दशदिवसान् यावत्स्खरतरास्त्यजन्त सन्ति, प्रश्नोत्तरग्रन्थे तु दशदिननिर्बन्धो ज्ञातो नास्ति इत्युक्तमस्ति, तत्कथमिति ? प्रश्नोऽत्रोत्तर—व्यवहारसूत्रवृत्तौ सूतकविषये यद्दशदिनवर्जन तद्देशविशेषपरत्वेन, ततो यत्र देशे सूतकविषये यावान्यावन्ति दिनानि वर्ज्जनीयानि, तेन प्रश्नोत्तरग्रन्थेन सह न कोऽपि विरोध इति ॥ २९० ॥

तथा—प्रवचनसारोद्धारस्य तृतीयशतकस्य त्रयस्त्रिंशत्तमगाथाया ' संगरिगाइमि अप्पक्किए ' एतत्पदव्याख्याने श्रीआणन्दसूरिणा—सङ्गरिकादौ अपक्वे पक्वे तु द्विदलदोषसम्भवाच्च कल्पते चोल्लादि इत्युक्तमस्ति, एतदुक्तिवशात् सांगरिफल बब्बूलफलमपि द्विदलत्वेन खरतरैरभ्युपगम्यते, आनन्दसूरिश्च वडगच्छीय श्रूयते, तेन तदुक्त कथमात्मना प्रमाण नास्तीति ? प्रश्नोऽत्रोत्तरं—आनन्दसूरिकृतग्रन्थस्तु अद्य यावद् दृष्टो नास्ति, तेन तद्दर्शने तद्विषयो विचारो युक्तिमात्रान्यपेति ॥ २९१ ॥

तथा—प्रज्ञापनाद्वितीयपदे आहाराधिकारे ' वाघायं पडुच्च पञ्चसु महाविदेहेसु ' एतत्पदव्याख्याने व्याघातो नामातिस्निग्धोऽतिरूक्षो वा कालः, तस्मिन्सति अग्निव्यवच्छेदात्, ततो यदा पञ्चसु भरतेषु पञ्चस्वैरवतेषु सुषमसुषमा सुषमदुष्षमा वर्त्तेते तदाऽतिस्निग्ध कालो दुष्षमदुष्षमाय

तथा—जिनसमवसरणे सङ्ख्याता सुरा मान्त्यसङ्ख्याता वा इति ? प्रश्नोऽत्रोत्तरं—जिनसमवसरणेऽसङ्ख्याता सुरनरादयो मान्तीति योगशास्त्रवृत्तौ प्रोक्तमस्ति, न च तत्र काप्यनुपपत्तिः, यच्च नाममालादौ यद्यपि कोट्यकोटिरुक्ता, तद्विशेषाऽविवक्षयेत्यवसीयते इति ॥ २८५ ॥

तथा—सांवत्सरिकप्रतिक्रमणकायोत्सर्गे ४० चत्वारिंशच्छ्लोकोद्योतकरान् कथयित्वा तत्प्रान्ते एको नमस्कारो वक्तव्य पश्चात् कायोत्सर्गः पारणीय इत्येवेति वक्ति, कश्चिच्च प्रान्ते नमस्कारं वक्तव्यं न ब्रूते, तेन किं प्रमाणमिति ? प्रश्नोऽत्रोत्तरं—सांवत्सरिकप्रतिक्रमणे सनमस्कारचत्वारिंशच्छ्लोकोद्योतकरकायोत्सर्गः प्रतिक्रमणहेतुगर्भादावुक्तोऽस्ति, पारम्पर्येणापि तथैव क्रियत इति ॥ २८६ ॥

यथा—सागारिके सति रजोहरणेन पदो प्रमार्जनं प्रमार्जनाऽसंयम इत्युक्तमस्ति, तत्र को हेतुरिति प्रश्नोऽत्रोत्तर—अपरिणतच्छ्लोकोपहासादिहेतुरवसेय इति ॥ २८७ ॥

तथा—अर्हदादिविंशति २० पदाराधनं यश्चतुर्थतपसा करोति, स तद्ध्येयपदगणनमुपवासदिने कुर्याद्दिनत्रयेऽपि वा इति प्रश्नोऽत्रोत्तर—यश्चतुर्थतपसा स्थानकाराधनं करोति स यदि पृथक् पृथक् चतुर्थान् करोति तदा त्रिष्वपि दिनेषु ध्येयपद गणयति, समुदितचतुर्थकरणे तु यथासम्भवमिति बोध्यम् ॥ २८८ ॥

तथा—इहैके सत्त्वाः पूर्वं नानाविधयोनिका स्वकृतकर्मवशगाश्चसस्थावरशरीरेषु सचित्ताऽचित्तेषु पृथ्वीकायत्वेनोत्पद्यन्ते, यथा शिर सु मणय करिदन्तेषु मौक्तिकानि विकलेन्द्रियेष्वपि शुक्त्यादिषु मौक्तिकानि स्थावरेष्वपि पारकरादिषु जीवा लवणभावेनोत्पद्यन्ते, एतान्यक्षराणि सूत्रकृदङ्गदीपिकायां सन्तीत्युक्त्वा मौक्तिकानि सचित्तानि खरतराः कथयन्त सन्ति, प्रश्नोत्तरग्रन्थे तु अचित्तानि तानि भवन्तीत्युक्तमस्ति, तत्कथमिति प्रश्नोऽत्रोत्तरं—सूत्रकृदङ्गदीपिकादौ मौक्तिकानि यद्यपि सचित्तत्वेनोत्पद्यन्ते इत्युक्तमस्ति, तथापि तान्यनुयोगद्वारादौ अचि-

ये च सर्वदा तेषां सचित्तत्वं वदन्ति तेषां श्राद्धयादिहस्तेन

सत्वेनोक्तानि, तेनोत्पत्तिस्थाने तानि सचित्तानि, तन्निर्गतानि चाचित्तानीति बहुश्रुता, विहरणायप्रसङ्ग ॥ २८९ ॥

तथा—" मायमयसूअगाईनिच्छूढा " इत्यादिसूतकशब्द प्रत्येकं सम्बध्यते, जातकसूतक नाम जन्मानन्तर दशाहानि यावत् मृतसू तकं मृतानन्तरं दश दिवसान् यावत्तत्र यद्वर्ज्यं तद्द्विधा–' लोग ' त्ति लौकिकं ' उत्तर ' त्ति लोकोत्तरं, लौकिकं द्विधा–इत्वर यावत्कथिकं च, तत्रेत्वरं यत्सूतकमृतकादि, तथाहि–लोके सूतकादि दश दिवसान् यावद्वर्ज्यत इति, यावत्कथिकं च वरुडछिम्पकचर्मकारडोम्बादि, एतान्यक्षराणि व्यवहारसूत्रवृत्तौ सन्तीत्युक्त्वा सूतकगृह दशदिवसान् यावत्सरतरास्त्यजन्त सन्ति, प्रश्नोत्तरग्रन्थे तु दशदिननिषेधो ज्ञातो नास्ति इत्युक्तमस्ति, तत्कथमिति ? प्रश्नोऽत्रोत्तरं—व्यवहारसूत्रवृत्तौ सूतकविषये यद्दशदिनवर्जनं तद्देशविशेषपरत्वेन, ततो यत्र देशे सूतकविषये यावानवधिस्ता वन्ति दिनानि वर्जनीयानि, तेन प्रश्नोत्तरग्रन्थेन सह न कोऽपि विरोध इति ॥ १९० ॥

तथा—प्रवचनसारोद्धारस्य तृतीयशतकस्य त्रयस्त्रिंशत्तमगाथाया ' संगरिगाइमि अप्पडिए ' एतत्पदव्याख्याने श्रीआणन्दसूरिणा—सङ्ग रिकावौ अपविते पतिते तु द्विदलत्वोपसम्भवाभ कल्पते चोलावि इत्युक्तमस्ति, एतदुक्तिबलात् सागरिफल बब्बूलफलमपि द्विदलत्वेन खरतरे [illegible]गम्यते आनन्दसूरिश्च वडगच्छीय श्रूयते, तेन तदुक्तं कथमास्मनां प्रमाण नास्तीति ? प्रश्नोऽत्रोत्तरं—आनन्दसूरिकृतग्रन्थस्तु अध [illegible] तद्विषयो विचारो युक्तिमात्रान्ययेति ॥ १९१ ॥

तथा—[illegible] पदे नादराग्नेरधिकारे ' नावायं पडुच पचसु महाविदेहेसु ' एतत्पदव्याख्याने व्याघातो नामातिस्निग्धोऽतिरूक्षो वा काल , तस्मिन्सति अग्निव्यवच्छेदात्, ततो यदा पञ्चसु भरतेषु पञ्चस्वैरवतेषु सुषमसुषमा सुषमदुष्षमा वर्त्तते तदाऽतिस्निग्धः काले दुष्षमदुष्षमाय

तथा—जिनसमवसरणे सङ्ख्याता सुरा मान्त्यसङ्ख्याता वा इति ? प्रश्नोऽत्रोत्तरं—जिनसमवसरणेऽसङ्ख्याता सुरनरादयो मान्तीति योगशास्त्रवृत्तौ प्रोक्तमस्ति, न च तत्र काप्यनुपपत्तिः, यच्च नाममालादौ क्वापि कोट्यकोटिरुक्ता, तद्विशेषाऽविवक्षयेत्यवसीयते इति ॥ २८५ ॥

तथा—सांवत्सरिकप्रतिक्रमणकायोत्सर्गे ४० चत्वारिंशल्लोकोद्योतकरान् कथयित्वा तदन्ते एको नमस्कारो वक्तव्य पश्चात् कायोत्सर्गं पारणीय कश्चिदिति वक्ति, कश्चिच्च प्रान्ते नमस्कारं वक्तव्यं न ब्रूते, तेन किं प्रमाणमिति ? प्रश्नोऽत्रोत्तर—सांवत्सरिकप्रतिक्रमणे सनमस्कारचत्वारिंशल्लोकोद्योतकरकायोत्सर्गं प्रतिक्रमणहेतुगर्भादावुक्तोऽस्ति, पारम्पर्येणापि तथैव क्रियत इति ॥ २८६ ॥

यथा—सागारिके सति रजोहरणेन पदो प्रमार्जनं प्रमार्जनाऽसंयम इत्युक्तमस्ति, तत्र को हेतुरिति प्रश्नोऽत्रोत्तर—अपरिणतलोकोपहासादिहेतुरवसेय इति ॥ २८७ ॥

तथा—अर्हदादिविंशति २० पदाराधन यश्चतुर्थतपसा करोति, स तद्ध्येयपदगणनमुपवासदिने कुर्यादिनत्रयेऽपि वा इति प्रश्नोऽत्रोत्तर—यश्चतुर्थतपसा स्थानकाराधनं करोति स यदि पृथक् पृथक् चतुर्थान् करोति तदा त्रिष्वपि दिनेषु ध्येयपद गणयति, समुदितचतुर्थकरणे तु यथासम्भवमिति बोध्यम् ॥ २८८ ॥

तथा—इहैके सत्त्वाः पूर्वं नानाविधयोनिकाः स्वकृतकर्मवशगाः त्रसस्थावरशरीरेषु सचित्ताऽचित्तेषु पृथ्वीकायत्वेनोत्पद्यन्ते, यथा शिरःसु मणय करिदन्तेषु मौक्तिकानि विकलेन्द्रियेष्वपि शुक्त्यादिषु मौक्तिकानि स्थावरेष्वपि पारकरादिषु शीघ्रा लवणभावेनोत्पद्यन्ते, एतान्यक्षराणि सूत्रकृदङ्गदीपिकायां सन्तीत्युक्त्वा मौक्तिकानि सचित्तानि खरतरा कथयन्त सन्ति, प्रश्नोत्तरग्रन्थे तु अचित्तानि तानि भवन्तीत्युक्तमस्ति, तत्कथमिति प्रश्नोऽत्रोत्तरं—सूत्रकृदङ्गदीपिकादौ मौक्तिकानि यद्यपि सचित्तत्वेनोत्पद्यन्ते इत्युक्तमस्ति, तथापि तान्यनुयोगद्वारादौ अचि-

सत्येनोक्तानि, तेनोत्पत्तिस्थाने तानि सचित्तानि, तन्निर्गतानि चाचित्तानीति मद्दुश्रुता, ये च सर्व्वदा तेषां सचित्तत्वं वदन्ति तेषां आद्यादिहस्तेन विहरणाद्यप्रसङ्गः ॥ २८९ ॥

तथा—" नायमयसूभगाईनिच्छ्या " इत्यादिसूतकशब्द प्रत्येकं सम्बद्ध्यते, जातकसूतकं नाम जन्मानन्तरं दशाहानि यावत् मृतसू तकं मृतानन्तरं दश दिवसान् यावत्तत्र यद्वर्ज्यं तद्विधा—' लोग ' त्ति लौकिकं ' उत्तर ' त्ति लोकोत्तरं, लौकिकं द्विधा—इत्वरं यावत्कथिकं च, तत्रेत्वरं यत्सूतकमृतकादि, तथाहि—लोके सूतकादि दश दिवसान् यावद्वर्ज्यते इति, यावत्कथिकं च वरूडछिम्पकचर्मकारडोम्बादि, एतान्यक्षराणि व्यवहारसूत्रवृत्तौ सन्तीत्युक्त्वा सूतकगृहं दशदिवसान् यावत्खरतरास्त्यजन्त सन्ति, प्रश्नोत्तरग्रन्थे तु दशदिननियमो ज्ञातो नास्ति इत्युक्तमस्ति, तत्कथमिति ? प्रश्नोऽत्रोत्तरं—व्यवहारसूत्रवृत्तौ सूतकविषये यद्दशदिनवर्जनं तद्देशविशेषपरत्वेन, ततो यत्र देशे सूतकविषये यावानवधिस्ता वन्ति दिनानि वर्ज्जनीयानि, तेन प्रश्नोत्तरग्रन्थेन सह न कोऽपि विरोध इति ॥ २९० ॥

तथा—प्रवचनसारोद्धारस्य तृतीयशतकस्य त्रयस्त्रिंशत्तमगाथाया ' संगरिगाइमि अप्पडिए ' एतत्पदव्याख्याने श्रीआणन्दसूरिणा—सङ्गरिकादौ अपतिते पतिते तु द्विदलदोषसम्भवान्न कल्पते घोलादि इत्युक्तमस्ति, एतदुक्तिबलात् सांगरिफलं बब्बूलफलमपि द्विदलत्वेन खरतरै रभ्युपगम्यते, आनन्दसूरिश्च वडगच्छीय श्रूयते, तेन तदुक्तं कथमात्मना प्रमाणं नास्तीति ? प्रश्नोऽत्रोत्तरं—आनन्दसूरिकृतग्रन्थस्तु अद्य यावद् दृष्टो नास्ति, तेन तद्दर्शने तद्विषयो विचारो युक्तिमाञ्चत्येति ॥ २९१ ॥

तथा—प्रज्ञापनाद्वितीयपदे बादराग्नेरधिकारे ' वाघायं पडुच्च पञ्चसु महाविदेहेसु ' एतत्पदव्याख्याने व्याघातो नामातिस्निग्धोऽतिरूक्षो वा कालः, तस्मिन्सति अग्निव्यवच्छेदात्, ततो यदा पञ्चसु भरतेषु पञ्चस्वैरवतेषु सुषमसुषमा सुषमदुष्षमा वर्त्तते तदाऽतिस्निग्ध काले दुष्षमदुष्षमाय

भातिस्त्र इत्यभिव्यक्च्छेद इत्युक्तमस्ति, अत्र च प्रथमारके तृतीयारके च बादराग्निनिषेधो भणितो न द्वितीयारके, तेन द्वितीयारकेऽग्निर्भवति नवा ? किञ्च सुषमादुष्षमायामग्न्यभिनिवेशः प्रोक्त, ' अगणिस्स य उट्ठाणं ' इत्यादिना चाग्निसम्भव प्रोचे, तदेतत्कथं सङ्गच्छते ?, किञ्चोत्सर्पिण्या द्वितीयारके कियति गते बादरोऽग्निरुत्पत्स्यते ? कियति गते च तस्मिन् नीतिप्रभृति तत्प्रवर्त्तकश्च को भविष्यतीति प्रश्नोऽत्रोत्तर–प्रज्ञापनेत्यत्र प्रज्ञापनापुस्तकपाठानुसारेण प्रथमद्वितीयतृतीयारकेषु कालस्यातिस्निग्धता प्रोक्ताऽस्तीति का शङ्का ? तथा तृतीयारकेऽतिस्निग्धतायामुक्तायामपि तत्प्रान्ते ' अगणिस्स य उट्ठाणं ' इत्यादि भणन तु अल्पत्याविवक्षणात सम्भाव्यते, तथोत्सर्पिण्या द्वितीयारकस्यादौ पुष्करसंवर्त्तादिपञ्चमेघवर्षणे भावरवनस्पतिप्रादुर्भवने बिलनिर्गतमनुष्यैर्मांसादिनिवृत्तिरूपा नीतिर्विहिता ग्रामादिनिवेशाश्वादिग्रहणादग्न्यादिसम्भवे पाकादिनिवर्त्तन च प्राग्भावजातिस्मरणात्प्रथमकुलकरादिप्रमुखाद्द्वितीयारकस्य प्रान्ते प्रवृत्तमिति हैमवीरचरित्रे प्रोक्तमस्ति ॥ २९२ ॥

तथा—प्रज्ञापनाद्वितीयपदे द्वीन्द्रियादीनां पर्याप्तापर्याप्तानां स्थानप्रश्नाऽधिकारे ' उड्ढलोए तदेक्कदेसभागे ' इत्यत्र ऊर्ध्वलोके तदेकदेशभागे मन्दरादिवाप्यादिषु द्वीन्द्रियादय शङ्खादय प्रोक्तास्सन्ति, " एगिंदिअ पंचिंदिअ, उड्ढे अ अहे अ तिरिअलोए अ विगलिंदिअजीवा पुण, तिरिअलोए मुणेअव्वा ॥ १ ॥ " एतस्यां च गाथायां तिर्यग्लोके विकलेन्द्रिया ज्ञातव्या इत्युक्तमस्ति, तत्कथं ? इति प्रश्नोऽत्रोत्तर–' एगिंदिअ पंचिंदिअ ' इति गाथायां यत्तिर्यग्लोके एव विकलेन्द्रियप्रतिपादन तद्बाहुल्यमाश्रित्य ज्ञेयम् ॥ २९३ ॥

तथा—प्रथमपदे आशालिकाऽधिकारे ' अंतोमुहुत्तद्धाउआ ' इति पाठो दृश्यते, वृत्तौ च अद्धेति पद व्याख्यानं नोपलभ्यते तेन सूत्रेऽधिकं वृत्तौ न्यूनं चेति प्रश्नोऽत्रोत्तर–सूत्रेऽद्धापद समस्ति वृत्तौ तद्व्याख्यान तु सुकरत्वान्न कृतमिति बोध्यम् ॥ २९४ ॥

असङ्ख्याता अनन्ता वा कियन्तो मीवा सन्ति ?

तथा—आर्द्रे नालिकेरे शुष्के वा कियन्तो नीवा सन्ति, तथा नालिकेरबीयके सङ्ख्याता असङ्ख्याता अनन्ता वा कियन्तो मीवा सन्ति ?

यतस्तमत्र केचिदनन्तमीवात्मक प्रतिपादयन्तीति प्रश्नोऽत्रोत्तर—बीयके सम्बद्धे नालिकेरे एक एव जीव इति ॥ २९५ ॥

तथा—शृङ्गाटके शुष्के आर्द्रे च कियन्तो नीवा सन्तीति प्रश्नोऽत्रोत्तरं—शृङ्गाटकफले शुष्के आर्द्रे वा मीवद्वयं प्रोक्तमस्तीति ॥ २९६ ॥

तथा—आउलिनामा वनस्पतिविशेष किं सङ्ख्यातनीवोऽसङ्ख्यातमीवोऽनन्तजीवो वा ? कुत्र च प्रोक्तोऽस्तीति प्रश्नोऽत्रोत्तरं—आउलिसत्कमूलादौ

असङ्ख्याता मीवा, पत्रादौ तु एकैको मीव इति प्रज्ञापनादौ प्रोक्तमस्तीति ॥ २९७ ॥

तथा—हस्तत्रयादारभ्य उत्सेधाङ्गुलेन यावत् पञ्चहस्तप्रमाणदेहधारिणा तद्भवे मोक्षो भवेन्न वेति प्रश्नोऽत्रोत्तर—उत्सेधाङ्गुलेन हस्तद्वया

दारभ्य साधिकपञ्चधनु शतानि यावत् शरीरधारिणो मीवा मुक्तिं गच्छन्तीति ॥ २९८ ॥

तथा—" अद्दामलगपमाणे, पुढवीकाए हवंति ने जीवा। ते पारेवयमित्ता, नम्बुद्दीवे न मायंति ॥ १ ॥ एगंमि उदगबिंदुमि, जे जीवा जिण-

वरेहिं पन्नत्ता। ते नइ सरसवमित्ता, नम्बुद्दीवे न मायंति ॥ २ ॥ " एतद्गाथाद्वयं प्रतिक्रमणसूत्रवृत्तिप्रवचनसारोद्धारसूत्रवृत्त्यादौ यथा दृश्यते

तथा तेजस्कायप्रभृत्येकेन्द्रियाणा जीवमानप्रतिपादिका गाथा प्रायो ग्रन्थे न दृश्यन्ते, तत्कथं ?, किञ्च मरटिकातन्दुलप्रमाणमात्रे तेजस्काये ये मीवास्ते

यदि मस्तकलिक्षाप्रमाणदेहधारिणो भवेयुस्तदा ते जम्बूद्वीपे न मान्ति, निम्बपत्रस्पृष्टमात्रे वायौ ये जीवा सन्ति ते यदि खसखसप्रमाणदेहा भवेयु

स्तदा जम्बूद्वीपे न मान्ति, अयमर्थ प्रमाणमप्रमाण वा ?, किञ्च—एतदर्थप्रतिपादके यादृश्यौ तादृश्यौ छुटितपत्रे गाथे अपि स्त, तथ्यथा—

' मरटीतंदुलमित्ता, तेऊजीवा जिणेहिं पन्नत्ता। मत्थयलिक्खपमाणा, जंबुद्दीवे न मायंति ॥ १ ॥ जे लींबपत्तफरिसा, वाऊजीवा जिणेहिं पन्नत्ता।

ते नइ खसखसमित्ता, नम्बूद्दीवे न मायंति ॥ २ ॥ " किञ्च पृथिवीकायादिमीवप्रमाणप्रतिपादिकायां गाथायां पारापतादयो ये प्रोक्तास्ते च तत्तीर्थ

कृत्स्नके भिन्नभिन्नप्रमाणदेहधारिणो भवन्ति तेन पारापतादय किंमळीना ग्राह्या इति प्रश्नोऽप्रोत्तर—त्रेमस्कायिकप्रभृतिशरीरमानप्रतिपादकं गाथाद्वयं यद्यपि महाग्रन्थे न दृश्यते, तथापि सूत्रेण सह सम्मतमेव, तदर्थस्य सूत्रानुयायित्वात् । तथा मीनमानप्रतिपादकपारापतादिप्रमाणमत्र स्थितकालत्वेन महाविदेहगतं ज्ञायत इति, मुग्धबोधनार्थमयमुपदेश इति न काऽप्यनुपपत्तिरिति ॥ २९९ ॥

तथा—नाममालायां 'षष्ठे पुन षोडशाब्दायुषो हस्तसमुच्छ्रयाः' इत्युक्तमस्ति, लघुक्षेत्रसमासे तु 'पथमसमछट्टारे, दुकरुणा वीस वरिसआउ नरा' इत्यस्ति, तेनैतत्कथं सङ्गच्छते इति प्रश्नोऽप्रोत्तर—नाममालायां मान यदुक्त तत्षष्ठारकप्रान्तमाश्रित्य, लघुक्षेत्रसमासे तु षष्ठारकस्यादिदिनमाश्रित्येति बोध्यम् ॥ १०० ॥

तथा—तेषु त्रिष्वारकेषु यथाक्रमं नराणां त्रिद्व्येकदिनैस्तुवरीकणबदरामलकमात्रमाहार इत्युक्तमस्ति लघुक्षेत्रसमासे, तुवरीकणादय आरकेऽरके पृथक्पृथक्प्रमाणास्तेन किमरकवर्तिनस्तुवरीकणादयोऽत्र ग्राह्या इति प्रश्नोऽप्रोत्तरं—तत्तदरकसम्भवितुवरीकणादिप्रमाण माहारस्य ज्ञेयम् ॥ १०१ ॥

तथा—'मध्यान्हाओ परओ, जाव दिवसस्स अंतोमुहुत्तो ताव घिप्पइ' इति सामाचारीमध्ये विद्यते, तेन तृतीययामादर्वाक् मध्याह्नात्परत रात्रिपौषध कर्तुं कल्पते न वा इति प्रश्नोऽप्रोत्तर—मध्याह्नात्परत पौषधग्रहण शुद्ध्यति, परं साम्प्रतीनप्रवृत्त्या प्रतिलेखनात् अर्वाग् न कार्यते, किन्तु परत इति ॥ १०२ ॥

तथा—शनैश्चरादीनां राशिपरावर्तदिनमिदमिति ज्ञात्वा ये जिनपूजाऽऽचाम्लादिक कुर्वते तेषां सम्यक्त्वं म्लानं भवति नवा इति प्रश्नोऽप्रोत्तरं—शनैश्चरराशिपरावृत्तिदिने विशेषतपःपूजादिकरणे सम्यक्त्वम्लाननिर्णीता नास्तीति ॥ १०३ ॥

तथा—यद्दिनत प्रारम्य शैवा माघस्नानं कुर्व्वते तद्दिनत एवारम्य केचन श्राद्धा अपि स्वगृहे उष्णोदकादिना स्नात्वा जिनधाम्नि गत्वा जिनपूजां कुर्व्वन्ति, मासप्रान्ते जिनभक्त्यर्थं रात्रिजागरणं मोदकादिलम्भनिकामपि कुर्व्वते, माघस्नानमिदमुच्यते, तत्करणे च मिथ्यात्व स्यादि त्युक्त्वा केचन एतत्कृत्यं निषेधयन्त सन्ति, तत्प्रमाणमप्रमाण वा इति, प्रश्नोऽत्रोत्तरं—माघमासं यावदुष्णोदकादिना स्नानकरण पूजाकरण तत्प्रान्ते रात्रिजागरण लम्भनिकादिकरणं च न युक्तिमत्प्रतिभाति, प्रसक्तदोषादिमर्यादनाचीर्णत्वादिति ॥ १०४ ॥

तथा—मोहनीयकर्म्मणोऽष्टाविंशति २८ अष्टमा निरन्तरं कर्त्तुमारब्धा सन्ति, तदन्तराले चोचरितपञ्चमीरोहिण्यादिकमागतं तदा तैरेवाष्टमै सरति किं वा पञ्चम्यादेस्तपश्च पृथक्कर्त्तणीयमिति प्रश्नोऽत्रोत्तर—मोहनीयकर्म्मसत्केषु निरन्तरमष्टमेषु क्रियमाणेषु उच्चरितपञ्चम्यादितपो यावन्मुक्त तावत्सति सामर्थ्ये पश्चात्करोति, स्थानकपदगणनसामर्थ्याभावे तु तदऽकरणेऽपि सरति ॥ १०५ ॥

तथा—पदगणन एकवारदेववन्दन वा विस्मृतं द्वितीयदिने पारणातः प्राक् तत्करोति यदि तदा शुद्ध्यति न वा इति, प्रश्नोऽत्रोत्तरं—प्रथमदिने विस्मृत पदगणनं एकशो देववन्दन वा द्वितीयदिने पारणकरणावर्वाग् अवधिपूर्त्यादिमहत्कारण विना न शुद्ध्यति, क्रियमाण तु दृश्यत इति ॥ १०६ ॥

तथा—पञ्चम्यां प्रतिमायां कच्छाटिकाचालनं निषिद्धमस्ति, तदाश्रित्य कश्चिद्वक्ति—रात्रौ चतुर्दिक्षु कायोत्सर्गे एव कच्छाटिका न चालनीया, अन्यदा सर्व्वकालं कच्छाटिका चालनीयैव, तदाश्रित्य कथमस्तीति प्रश्नोऽत्रोत्तर—पञ्चमीप्रतिमातोऽबद्धकच्छ इत्येव ग्रन्थे दृष्टमस्तीति कायोत्सर्गावसरे एव कच्छाटिका मोच्येति यो वक्ति स एव प्रष्टव्य—एवंविधान्यक्षराणि क्व सन्तीति ॥ १०७ ॥

तथा—समवसरणस्तोत्रे यक्षधराश्चामराणि वीजयन्त प्रोक्तास्सन्ति "करकलिअकयणदंडा सोहम्मीसाण सुरवरा ताव। ढालिंति चाम

राई उभओ पासेसु उद्धठिआ ॥ १ ॥" इति श्रीऋषभनाथमहत्स्युक्तगाथायां तु सौधर्मेशानसुरवरा प्रोक्ता दृश्यन्ते, तेन उभयोर्मध्ये किं प्रमाणं इति प्रश्नोऽत्रोत्तर—श्रीऋषभनाथग्रन्थोऽत्र हस्तप्राप्यो नास्तीति ॥ १०८ ॥

तथा—तीर्थकृद्व्याख्यानं श्राद्धा ऊर्ध्वस्थिता शृण्वन्ति इत्यक्षराणि कुत्र सन्तीति प्रश्नोऽत्रोत्तरं—आचाराङ्गचूर्णौ स्त्रिय ऊर्ध्वस्थिता शृण्वन्तीत्युक्तमस्तीति ॥ १०९ ॥

तथा—श्राद्धा इव देव्योऽपि ऊर्ध्वस्था एव व्याख्यानं शृण्वन्त्युतासीना इति प्रश्नोऽत्रोत्तर—आवश्यकचूर्णौ देव्य ऊर्ध्वं स्थिता शृण्वन्तीत्युक्तमस्तीति ॥ ११० ॥

तथा—पाश्चात्यरात्रौ साधुसमीपे समागत्य यत् श्राद्धा प्रतिक्रमणं कुर्वाणा दृश्यन्ते, तस्याक्षराणि कुत्र ग्रन्थे सन्तीति प्रश्नोऽत्रोत्तर—सामाचार्यनुसारेण यथा पौषधकरणाय पाश्चात्यरात्रौ साधुसमीपसमागमनं दृश्यते तथा प्रतिक्रमणकृतेऽपि तद् युक्तिमद् ज्ञायत इति ॥ १११ ॥

तथा—घटिकाद्वयावशेषरात्रिसमये पौषधं करोति कश्चित्, कश्चिच्च वस्त्राद्यप्रतिलेखना कृत्वा तत्करोति, तयोर्मध्ये कः शास्त्रोक्तविधिरिति प्रश्नोऽत्रोत्तर—पाश्चात्यरात्रौ पौषधकाले पौषधविधानमिति मौळो विधि, कालातिक्रमे तद्विधानं स्वापवादिकमिति ॥ ११२ ॥

तथा—" आवस्सय ओहनिज्जुत्ति १ पिंडनिज्जुत्ति २ उत्तरज्झयणे ३ । दसकालिअ ४ चउरोवि, मूलगंथे सरेमि सया " ॥ १ ॥ इति श्रीकुलमण्डनसूरिकृतप्राकृतसिद्धान्तस्तवगाथा, एतस्यां च मूलग्रन्थाश्चत्वार एते प्रोक्ता सन्ति, श्रीहीरविजयसूरिप्रसादितप्रश्नोत्तरसमुच्चयग्रन्थे च कश्चिद्भेदो दृश्यते, तत्कथं इति प्रश्नोऽत्रोत्तरं—उक्तगाथायामोघनिर्युक्तेर्निर्युक्तित्वेनावश्यकनिर्युक्त्यन्तर्भूतत्वान्न पृथग् विवक्षा,

पिण्डनिर्युक्तेस्तु निर्युक्तित्वेनैव पिण्डैषणाध्ययनसूत्रात्पृथग्विवक्षया, प्रश्नोत्तरसमुच्चये त्वोघनिर्युक्ते छुटकपत्रलिखितानुसारेण विभिन्नविषयत्वात् पृथग्गणन, पिण्डनिर्युक्तेस्तु पृथगविवक्षैवेति सर्वमवदातम् ॥ २१२ ॥

तथा—" तिपयाहिणापुरस्सर महावीरजिणेसरं गणहरे अ । [ श्रेणिक ] पणिवइऊण नइरिह ईसाणदिसाए निवेसेइ " ॥ १ ॥ इति शीलभावनावृत्त्युक्तगाथाया अर्थानुसारेण यथा श्रीमहावीरजिनस्य प्रदक्षिणात्रिक प्रदातव्यं, तथा गणधराणामपि पृथग् प्रदातव्य न वा इति प्रश्नोऽत्रोत्तरं—तीर्थकरप्रदक्षिणात्रय कुर्वतो गणधराणामपि तत्त्रयं सहैव भवतीति ज्ञायते ॥ २१४ ॥

तथा—केचन वृद्धशालिका इत्थ वदन्ति ' इरिआकुसुमिणुसग्गो ' इति गाथाद्वयोक्तविधिद्वय मार्गादिकारणे श्रद्धालुर्न करोति तद्युक्तमयुक्त वा इति प्रश्नोऽत्रोत्तर मार्गादिकारणे विधिद्वयसत्यापन युक्तमेवेति ॥ २१५ ॥

तथा—प्रतिष्ठायां प्रतिमाया नेत्रोन्मीलकेऽञ्जने मधु क्षिप्यते न वा इति प्रश्नोऽत्रोत्तरं—साम्प्रतं प्रतिष्ठायामञ्जने मधुशब्देन शर्कराऽभिधीयत इति सैव प्रक्षिप्यते ॥ २१६ ॥

## अथ पण्डितजयवन्तर्षिगणिकृतप्रश्नौ तदुत्तरे च,

यथा—चतुर्मासकमध्ये विजयदशमीं यावत् खण्डाविहरण कथ न शुद्ध्यतीति प्रश्नोऽत्रोत्तरं—परम्परया खण्डाविहरण निषिध्यते इति॥२१७॥

तथा—प्रतिक्रमणमध्ये विद्युत्प्रदीपादिप्रकाश शरीरे लगति तदाऽग्निकायविराधना मन्यते तत्तपाकृतग्रन्थेऽस्त्यन्यत्र वा इति प्रश्नोऽत्रोत्तर—आवश्यकनिर्युक्तिकायोत्सर्गाध्ययने " अगणीउ छिंदिज्ज व, बोहिअ खोभा य दीहडक्को वा । आगारेहिं अभग्गो उस्सग्गो,

एक्मार्हद्दिं ॥ १ ॥ " एतद्गाथावृत्तिमध्ये ' अगणि ' त्ति यदा ज्योतिः स्पृशति तदा प्रावरणाय कल्पकग्रहणं कुर्वतोऽपि कायोत्सर्गभङ्गो न भवतीति प्रतिपादितमस्तीति ॥ ३१८ ॥

## अथ पण्डितभक्तिसागरगणिकृतप्रश्नास्तदुत्तराणि च,

यथा—श्राद्धा कथयन्त्यस्माकं पौषधिका रात्रेस्तुर्ययामे समुत्थाय पौषधमध्ये सामायिकं कुर्वन्ति, तदक्षराणि च प्रतिक्रमणसूत्रचूर्णौ सन्ति, तेन श्रीमतां श्रीपूज्याः सामायिकं कथं न कारयन्तीति प्रश्नोऽत्रोत्तरं—रात्रिपौषधमध्ये पाश्चात्यरात्रौ सामायिककरणमाश्रित्य यानि चूर्ण्यक्षराणि सन्ति तानि सामाचारीविशेषेण समर्थनीयानि नतु दूषणीयानि, तस्याः शिष्टकृतत्वात्, न चात्मनां तदक्षरदर्शनेन तत्कर्त्तव्यतापत्तिः, सर्वेऽपि सामाचारीविशेषाः सर्वैरपि अवश्यंभावेन विधेया एवेति शास्त्राक्षरानुपलम्भादिति । किञ्च—खरतरपक्षीयाणां चूर्णिगतैकवचनं युक्तिमत् प्रतिभाति, तद्गतसकलसामाचार्यास्वीकरणात्, यदि च तेषां चूर्णौ प्रामाण्यमेव तदा तद्गता सकलाऽपि सामाचारी तैः कथं न विधीयत इति बहु वक्तव्यमस्तीति ॥ ३१९ ॥

तथा—अभव्यानां सर्वथा निर्वाणश्रद्धानराहित्यवद्देवलोकादिपरलोकश्रद्धानस्य राहित्यं साहित्यं वा ?, किञ्च—जीवादिश्रद्धानमाश्रित्य कारमर्दकाचार्यसदृशाः सर्वेऽभव्या उत नेति, किञ्च—सर्वदाध्यवसायस्य सादृश्यमुत न्यूनाधिकत्वं वा ?, यदि सर्वेषामध्यवसायसादृश्यं स्यात्तदा तेषामप्यनन्तशो ग्रन्थिदेशे समागमनं प्रोक्तमस्ति तत्कथं सम्भवति, तदध्यवसायभेदाविनाभावित्वात्, किञ्च-प्रतिक्रमणसूत्रवृत्तावभव्यस्य किञ्चिन्नानि दश पूर्वाणि प्रोक्तानि सन्ति तत्कथं सम्भवति, यतः प्रवचनसारोद्धारादौ पूर्वोक्तश्चेन्निषेधः कथितोऽस्ति, अपि चागमव्यवहारिणामन्तःपातित्वं

तेषां कथं सम्भवतीति प्रश्नोऽत्रोत्तर–सर्व्वेषामभव्यानां मुक्तिश्रद्धान न भवत्येव, देवलोकादिश्रद्धानं तु केषाञ्चिद्भवत्यपि, विशेषावश्यकवृत्त्यादौ तथोक्ते । तथा अभव्यानां अध्यवसायवैचित्र्य स्यादेव, यतो नवमग्रैवेयकादिक सप्तमनरकादिक च यावद्गच्छतां शुक्लकृष्णादिलेश्यावतामुभयेषामपि अध्यवसायसाम्य न घटते, कार्यभेददर्शने कारणभेदाभ्युपगमस्य न्यायसिद्धत्वात्, सर्व्वेऽप्यभव्या अङ्गारमर्दकाचार्यसदृशा एव भवन्तीत्यपि शास्त्रे दृष्ट नास्ति । तथा अभव्यानां पूर्व्वगतलब्धिमाश्रित्य पूर्व्वाणि धारयन्तीति दशचतुर्दशपूर्व्वविद इत्यावश्यकबृहद्वृत्तिवचनात् अभिन्नदशपूर्व्व धरादय पूर्वगतलब्धिमन्तोऽवसीयन्ते, नत्वन्ये, अत एवाभव्याना भिन्नदशपूर्व्वीश्रुतलाभेऽपि शास्त्रान्तरोक्तपूर्वगतलब्धिनिषेधो युक्तिमानेव । तथा तेषामागमव्यवहारित्वेऽपि न काऽपि क्षिति, भव्या एवागमव्यवहारिण इत्यक्षराणा शास्त्रेष्वदर्शनात् ॥ १२० ॥

तथा—यो मोक्षार्थं क्रिया करोति स क्रियावादीति प्रघोष सत्योऽसत्यो वा ?, यदि सत्यस्तर्हि मोक्षार्थं जीवघातं कुर्व्वत्सु सत्स्वपि तुरुष्कादिफिरङ्गिकपर्यन्तसर्व्वमिथ्यादृष्टिषु क्रियावादित्वं स्यात्, तत्तु केषाञ्चिदात्मश्रद्धानामप्रत्ययढुण्ढकसाधूना च चेतसि न प्रतिभासते, प्रत्युत ढुण्ढिका इत्थ कथयन्ति-श्रीमतां ये ये गीतार्था अत्र समायान्ति ते सर्वेषा क्रियां कुर्व्वता मिथ्यादृशां क्रियावादित्वं कथयन्ति, तदसमीचीन श्रद्धानं, ते तु ढुण्ढिका सम्यग्दृशां सम्यक्त्वाभिमुखाना च क्रियावादित्व कथयन्ति, नान्येषामिति प्रश्नोऽत्रोत्तरं—यो मोक्षार्थं क्रिया करोति स क्रियावादीति प्रघोष सत्य एव लक्ष्यते, न च कोऽपि मोक्षार्थं जीवघातादिक करोति, यत तुरुष्काणामपि मूलशास्त्रेषु जीववधस्य निषिद्धत्वात्, याज्ञिकानामपि स्वर्गाद्यर्थमेव यज्ञस्य प्ररूपणात्, तथा सम्यग्दृश एव सम्यक्त्वाभिमुखा एव वा क्रियावादिन इत्यक्षराणि शास्त्रे न सन्ति प्रत्युत भगवतीवृत्तावि त्युक्तमस्ति—एते च सर्व्वेऽप्यन्यत्र यद्यपि मिथ्यादृष्टयोऽभिहितास्तथापीहाद्या सम्यग्दृष्टयो ग्राह्या, सम्यगस्तित्ववादिनामेव तेषां समाश्रयणात् ' भगवतीसूत्रं च विशेषपर, तेन तत्र क्रियावादिपदेन सम्यग्दृष्टयो गृहीत , अन्यत्र तु मिथ्यादृष्टयोऽपि, तत उभयेऽपि क्रियावादिन इति तत्त्वम् ॥ १२१ ॥

तथा—प्रज्ञापनातृतीयपदवृत्तौ क्षेत्रानुसारेण चिन्त्यमाना पुद्गला लोकैकदेशस्पर्शिन सर्वलोकस्पर्शिन इत्युक्त, तत्र के ते ? कथं वा त्रैलोक्य व्यापिनो भवन्तीति प्रश्नोऽत्रोत्तरं—महास्कंधा द्वेधा सचित्ताचित्तभेदात्, तत्र केवलिसमुद्घाते सकललोकव्यापी अनन्तानन्तकर्मपुद्गलमयो महास्कन्ध सचेतनजीवाधिष्ठितत्वात् सचित्तमहास्कन्ध उच्यते, तदितरस्तु पुद्गलमयस्तु विस्रसापरिणामजनित सकललोकव्याप्यचित्तमहास्कन्ध, एवमन्येऽपि केचित्तथा सकललोकव्यापिनो महास्कन्धा ज्ञेया, यद्येतद्विषया भूयस्यपेक्षा तदा विशेषावश्यकवृत्तौ पीठिकायां द्रव्यवर्गणाधिकारो विलोकनीय इति ॥ १९२ ॥

## अथ पण्डितशुभकुशलगणिकृतप्रश्नस्तदुत्तर च--

यथा—सम्प्रति तपागच्छीयश्राद्धा यथेर्यापथिकीप्रतिक्रमणपूर्वकं सामायिकमुखपोतिकां प्रतिलेखयन्ति तथा क्व शास्त्रे प्रतिपादितमस्तीति प्रश्नोऽत्रोत्तरं—महानिशीथे हारिभद्र्यां दशवैकालिकवृत्तौ च स्पष्टतया सर्वमपि चैत्यवन्दनाद्यनुष्ठानमैर्यापथिकीप्रतिक्रमणपूर्वकमेवोक्तमस्ति, तन्मध्ये सामायिकमुखपोतिकाप्रतिलेखनमप्यायातमेव, तेन तदपीर्यापथिकाप्रतिक्रमणपुरस्सरमेव विधेयमिति तत्त्वम् ॥ २२१ ॥

## अथ पण्डितप्रेमविजयगणिकृतप्रश्नौ तदुत्तरे च--

यथा—जिना गृहस्थावस्थाया केवलिन साधुं वा प्रणमन्ति नवा इति प्रश्नोऽत्रोत्तर—निषेधो ज्ञातो नास्ति ॥ २२४ ॥

तथा—षट्पञ्चाशद्दिक्कन्यकानां कुमारीति सञ्ज्ञा कथमिति प्रश्नोऽत्रोत्तर—अत्र भवनपतय सर्वेऽपि प्राय क्रीडाप्रिया भवन्तीति कुमारा उच्यन्ते, तथा एता दिक्कुमार्योऽपि भवनपतित्वेन तद्वद्बोध्या इति ॥ २२५ ॥

## अथ पण्डितमुनिविमलगणिकृतप्रश्नास्तदुत्तराणि च–

यथा—प्रतिवासुदेवस्य कियन्ति कानि च रत्नानि स्युरिति प्रश्नोऽत्रोत्तर–प्रतिवासुदेवस्य रत्नसङ्ख्याया रत्नानां च नियम शास्त्रे दृष्टो नास्ति, तेन चक्रादीनि तानि यथासम्भवं भविष्यन्तीति सम्भाव्यत इति ॥ १२६ ॥

तथा—किल्बिषसुराणा प्रथमद्वितीयकल्पाधस्तृतीयकल्पाध षष्ठकल्पाधश्च स्थितिरुक्ताऽस्ति, तत्राध शब्देन किमभिधीयते, अधस्तनप्रस्तटं तस्मादप्यधोदेशो वा ?, अन्यच्च द्वात्रिंशदादिलक्षविमानाना मध्ये साधारणदेवीनामिवैतेषां कतिचिद्विमानानि सन्ति विमानैकदेशो विमानाद्बहिर्वा तिष्ठन्ति, तस्मादप्यधोदेशो वा ?, अन्यच्च द्वात्रिंशदादिलक्षविमानाना मध्ये वासोऽनुचित, विमानानामपान्तराले भुवोऽभावाद्बहिरपि तद्वास कथं घटत इति किल्बिषाणा वासस्थान प्रथासरपूर्वकं प्रसाद्यमिति प्रश्नोऽत्रोत्तर–किल्बिषसुराणा वास कल्पद्विकादीनामधो भणित इत्यत्राध शब्दस्तत्स्थानवाचको ज्ञेय, न चात्राध शब्द प्रथमप्रस्तटाधा घटते, तृतीयषष्ठकल्पसत्ककिल्बिषिकामराणां तत्प्रथमप्रस्तटयोस्त्रिसागरोपमत्रयोदशसागरोपमस्थित्योरसम्भवात्, तथा तद्विमानाना सङ्ख्या शास्त्रे नोपलभ्यते, तथा देवलोकगतद्वात्रिंशल्लक्षादिविमानसङ्ख्याया मध्ये तद्विमानाना गणन न सम्भाव्यते, तेषा कल्पद्विकादीनामधो वासाभिधानात्, तत्त्व तु सर्वविद्वेद्यमिति ॥ १२७ ॥

तथा—'भमि उ पीछिज्जते' इति गाथायथाश्रुतार्थेन चन्नूलादीनां द्विदलत्वं नोत्थाप्यते, प्रत्युत न्यवस्थाप्यते, नि स्नेहत्वात्, तेनैतद्द्विदलताव्यपोहायैतद्गाथाभावार्थ प्रसाद्य इति प्रश्नोऽत्रोत्तरं–यस्मिन्पीड्यमाने सति स्नेहो न भवति, दालिकरणे द्विदलतासम्भवे सतीति शेषस्त द्धान्यादिकं पूर्वाचार्या द्विदल ब्रुवन्ति, द्विदले उत्पन्नमपि स्नेहयुत द्विदल न भवतीति प्रस्तुतगाथाभावार्थो व्यक्त एवास्ति, तेन चन्नूलादीनां मिञ्जासु स्नेहसद्भावात्तेषां द्विदलताऽभावो बोध्य इति ॥ १२८ ॥

तथा—उपासकदशाङ्गे योगशास्त्रे च श्राद्धाना पञ्चाचारातिचारा कथं नोक्ता इति प्रश्नोऽस्योत्तर—उपासकदशाङ्गयोगशास्त्रयो सम्यक्त्वमूलकव्रतानामेवाभिधातुमुपक्रान्तत्वात्तदतिचारा एवोक्ता इति ॥ १०९ ॥

तथा—आमगोरससम्पृक्तद्विदलं इत्यत्र गोरसशब्देन किं व्याख्यातमस्ति इति प्रश्नोऽस्योत्तर—गोरसशब्देन दुग्ध दधि तक्र च त्रयमपि परम्परयाऽभिधीयमानमस्ति, योगशास्त्रवृत्तौ गोरसशब्दार्थो व्याख्यातो नास्ति ॥ ११० ॥

तथा—सन्धानस्य योगशास्त्राभिप्रायेण संसक्ते सति त्याज्यत्व, प्रवचनसारोद्धारे तु ससक्तत्वविशेषण नास्ति, तत्र कोऽभिप्राय ? सन्धानं च कया रीत्या कुर्वं सत्स्यात् कया रीत्या च न इति प्रश्नोऽस्योत्तरं—सन्धानस्य त्याज्यत्वे हेतु प्राय ससक्तत्वमेवेति, प्रवचन-सारोद्धारे तु संसक्तमर्थाल्लभ्यत एव । सन्धान च मलादिजनितार्द्रत्वे सति भवतीति वृद्धव्यवहारोऽस्तीत्यवसेय ॥ १११ ॥

तथा—पाक्षिकप्रतिक्रान्तौ श्राद्धैरुच्यमानास्तपआचाराद्यतीचारा साधुभि श्रूयन्ते, केवलसाधवश्च प्रतिक्रामन्तस्तानतीचारान् कथयन्ति न वा ? साम्प्रतं तु न केचित्कथयन्तीति प्रश्नोऽस्योत्तर—केवलसाधुभि पाक्षिकप्रतिक्रमणे क्रियमाणे तपआचाराद्यतीचारा यथायान्ति तदा स्वय कथनीया, तत्प्रवृत्तिरपि दृष्टाऽस्तीति ॥ ११२ ॥

तथा—श्राद्धानां चरवलकग्रहणं ' सदप्यिअकरणे ' त्ति विना यत्करीत्या कयाचिच्चूर्ण्यादावभिहितं स्यात् तदा तान्यक्षराणि प्रसाद्यानीति प्रश्नोऽस्योत्तरं—' साहूण सगासाओ रयहरण निसिज्जं वा मग्गंति, अह घरे तो से उवग्गहिअरयहरणं अत्थि ' इत्यादिकान्यावश्यकचूर्ण्यादौ रजोहरणाक्षराणि सन्ति, श्राद्धाना च रजोहरणं चरवलक एवेति ॥ ११३ ॥

तथा—जीवाभिगमादौ सूत्रे आरात्रिकमङ्गलप्रदीपाक्षराणि यदि स्युस्तदा तानि प्रसाद्यानीति प्रश्नोऽत्रोत्तर—जीवाभिगमादिसूत्रेष्वारात्रिकमङ्गलप्रदीपाक्षराणि साक्षान्नोपलभ्यन्ते, प्रकरणेषु तु बहुषु सन्ति, तत्रापि विप्रतिपत्ति पश्चादीमङ्गीकुर्वता काऽपि नास्तीति तात्पर्यम् ॥ १२४ ॥

तथा—खानिमोऽपि हिङ्गुल 'नोभणसय तु गंतु' इत्यक्षरबलात् प्रवहणादागतोऽचित्तीभवति, कृत्रिमस्य तदचितत्वे किं वाच्यं ? तथापि तस्य सचित्तत्वाव्यवहार क्रियते, तत्र को हेतुरिति प्रश्नोऽत्रोत्तर—हिङ्गुल खानिमो योजनशतादे परत आयातस्तत्कृत्रिमश्च स्वत एवोभावप्यचित्तौ ज्ञायेते, तद्ग्रहण तु अनाचीर्णतया, तेन साम्प्रत सवर्तित सन् गृह्यत इति यतिव्यवहार इति ॥ १२५ ॥

## अथ पण्डितदेवविजयगणिकृतप्रश्नास्तदुत्तराणि च–

यथा—'नत्थ जलं तत्थ वणं' इति व्याप्ति सावधारणाऽन्यथाऽपि वा ? तदपि वनं किं प्रत्येकरूपं साधारण उभयं वा ? तदुभयमपि किं सूक्ष्म बादर तदुभयमपि वा ? तथा 'जत्थ जल' मिति वचोयुक्त्या कुम्भादिगतजलव्यापारणे श्राद्धस्य वनस्पतिकायविराधनापि लगति न वा इति प्रश्नोऽत्रोत्तर—इयं व्याप्ति सावधारणा ज्ञायते श्रीदशवैकालिके पिण्डैषणाध्ययने 'साहट्टु निक्खिवित्ताण' इत्यादि गाथावृत्तौ तथोक्तेः । तथा स वनस्पतिर्बादरसाधारणप्रत्येकरूपो ज्ञायते । तथा कुम्भादिगतजलव्यापारणे वनस्पतिविराधना भवति, पर तत्प्रत्याख्यानभङ्गो न भवति, तस्य व्यावहारिकवनस्पत्याश्रितत्वादिति ॥ १२६ ॥

तथा—उपधानावाहिनां पञ्चमङ्गलमहाश्रुतस्कन्धपाठे विराधनायामनन्तसंसारावाप्ति फल, तदाश्रित्य किमादिश्यते इति प्रश्नोऽत्रोत्तर—उपधानावहनेऽनन्तससारिता महानिशीथे उक्ता, पर तत्सूत्रमुत्सर्गनयाश्रित, तेन यो नास्तिकस्सन्नुपधानवहननिरपेक्षस्तस्य सेति ज्ञेयम् ॥ १२७ ॥

तथा—पौषधिकस्य भोमनाक्षराणि क सन्तीति प्रश्नोऽत्रोत्तर—पौषधिकस्य भोमनाक्षराणि पञ्चाशकचूर्णौ श्राद्धमतिक्रमणसूत्रचूर्ण्यादौ स्यकानि सन्तीति ॥ ११८ ॥

तथा—' चाउद्दसट्ठमुद्दिट्ठपुण्णिमासिणीसु णं पडिपुण्णं पोसहं ' इत्यत्र श्रीसूत्रकृताङ्गवृत्तौ उद्दिष्टशब्देन कल्याणकतिथय उक्ता, पौर्णमासी-शब्देन तु तिस्रश्चतुर्मासकपूर्णिमा उक्ता, राजप्रश्नीयवृत्तौ तु उद्दिष्टशब्देनामावास्या पौर्णमासीशब्देन सामान्येन पूर्णिमा उक्तास्तदत्र कथमर्थभेद इति प्रश्नोऽत्रोत्तरं—सूत्रकृताङ्गवृत्तिराजप्रश्नीयवृत्तिव्याख्याने चरितानुवादपरं, न च तत्साधकं बाधकं वा भवति, भगवतीवृत्तियोगशास्त्रवृत्त्यादौ तु चतुष्पर्व्यधिकारे सामान्यत पूर्णिमाऽमावास्ये उक्ते स्त इत्यत्र श्रावकाना तत्र ते ज्ञेये इति ॥ ११९ ॥

तथा—सिद्धति ' पडिपुण्ण पोसहं पालेमाणे ' इति पाठ टीकया प्रतिपूर्णमहोरात्रमिति व्याख्यात, तत केवलदिवसपौषधाक्षराणि क्व सन्तीति प्रश्नोऽत्रोत्तरं—उत्तराध्ययनसूत्रपञ्चमाध्ययने ' अगारिसामाइअंगाइ ' एतद्गाथावृत्त्यनुसारेण प्रतिपूर्णपौषधकरण प्रायिक ज्ञेयमिति ॥ १४० ॥

तथा—पौषधिक पट्टपट्टिकालिखितप्रतिमा वासेन पूजयति नवा इति प्रश्नोऽत्रोत्तरं—पौषधिक कारण विना पट्टादिक न पूजयतीति ज्ञेयमिति ॥ १४१ ॥

तथा—कर्मग्रन्थवृत्तौ ' जातिस्मरणमपि अतीतसङ्ख्यातभवाऽवगमस्वरूपं मतिज्ञानमेव ' इत्युक्तमस्ति " पुव्वभवा सो पिच्छइ, इक्क दो तिन्नि जाव नवगं वा । उवरिं तस्स अविसओ, सहावओ जाइसरणस्स " ॥ १ ॥ इति गाथार्थो तु नवैव भवा जातिस्मरणस्य विषयस्तत्कथमिति प्रश्नो-

ज्ञायते, कर्म्मग्रन्थवृत्तावपि स एवाभिप्रायोऽस्ति

ऽमोचरं—जातिस्मरणवान आचाराङ्गवृत्त्याद्यभिप्रायेणातीतान् सङ्ख्यातान् भवान् पश्यतीति

'पुव्वभवा सो पिच्छइ' इयं गाथा तु त्रुटितपत्रस्था न तु तथाविधग्रन्थस्था, तेन निर्णायिका न भवतीति ॥ २४१ ॥

तथा—"छम्मासाऊसेसे, उप्पन्नं जेसि केवलं नाणं । ते नियमसमुग्घाया, सेस समुग्घाय भयणिज्जा" ॥ १ ॥ इति दीपालिकायां

"य षण्मासाऽधिकायुष्को, लभते केवलोद्गमम् । करोत्यसौ समुद्घातमन्ये कुर्वन्ति वा न वा ॥१॥" गुणस्थानप्रकरणे "यस्य पुन केवलिन,

कर्म्म भवत्यायुषोऽधिरिक्ततरम् । स समुद्घातं भगवानुपगच्छति तत्समीकर्तुम्" ॥ १ ॥ इति प्रशमरताविति त्रयाणां मध्ये क केवली

नियमत समुद्घात करोति कश्च न करोतीति प्रश्नोऽत्रोत्तर—प्रज्ञापनासूत्रवृत्तिभवभावनासारोद्धारवृत्तिप्रशमरत्यादौ सामान्यत समुद्घातस्वरूपं

प्रोक्तमस्ति, न तु कश्चिद्विशेषो, गुणस्थानकक्रमारोहसूत्रे तु य षण्मासाधिकायुष्क इत्यादि विशेषोऽपि दृश्यते, अत्र मतभेदस्सम्भाव्यते, तत्त्वं तु

केवलिनो विदन्ति, दीपालिकायास्तु गुणस्थानक्रमारोहवृत्तिकारेण तद्गाथाया स्वोक्तसमर्थनाय सामान्येन दर्शितत्वात्तदनुयाय्येव, परस्परं

तदुपपत्तिश्च 'छम्मासाऊसेसे' इत्यत्र प्राकृतशैल्या षण्मासायुःशब्दात् सप्तम्येकवचनलोपे शिष्यते—विशिष्यतेऽधिकियते इति शेष इति शेषशब्दस्या

धिकवाचकत्वे च किञ्चिदधिके षण्मासायुषीत्यर्थकरणेन ज्ञेया, षण्मासशब्दादधिकशब्दस्य लोपेन वा इति ॥ २४२ ॥

तथा—नारकजीवेभ्यो निगोदजीवाना दु खमधिक निगोदजीवेभ्यो वा नारकजीवानामिति प्रश्नोऽत्रोत्तर—निश्चयतो नारकजीवेभ्यो निगोद

जीवानां जन्ममरणाद्येकशरीरानन्तजीवावस्थानादिरूपं महद् दु खं, परं तन्मत्तमूर्च्छितादीनामिव नातिदुस्सहं, व्यवहारतस्तु निगोदजीवेभ्यो नारक-

जीवाना परमाधार्मिककृतवेदनादिरूपं महद्दु खमिति वृद्धवाद इति ॥ २४३ ॥

तथा—पौषधिकस्य भोजनाक्षराणि क सन्तीति प्रश्नोऽत्रोत्तरं—पौषधिकस्य भोजनाक्षराणि पञ्चाशकचूर्णौ श्राद्धप्रतिक्रमणसूत्रचूर्ण्यादौ व्यक्तानि सन्तीति ॥ ११८ ॥

तथा—' चाउद्दसट्ठमुद्दिट्ठपुण्णिमासिणीसु ण पडिपुण्णं पोसहं ' इत्यत्र श्रीसूत्रकृताङ्गवृत्तौ उद्दिष्टशब्देन कल्याणकतिथय उक्ता, पौर्णमासीशब्देन तु तिसृषु चतुर्मासकपूर्णिमा उक्ता, राजप्रश्नीयवृत्तौ तु उद्दिष्टशब्देनामावास्या पौर्णमासीशब्देन सामान्येन पूर्णिमा उक्तास्तदेतत् कथमर्थभेद इति प्रश्नोऽत्रोत्तरं—सूत्रकृताङ्गवृत्तिराजप्रश्नीयवृत्तिव्याख्यानं चरितानुवादपरं, न च तत्साधकं बाधकं वा भवति, भगवतीवृत्तियोगशास्त्रवृत्त्यादौ तु चतुष्पर्व्यधिकारे सामान्यतः पूर्णिमाऽमावास्ये उक्ते स्त इत्यत्र श्रावकानां तत्र ते ज्ञेये इति ॥ ११९ ॥

तथा—सिद्धान्ते ' पडिपुण्णं पोसहं पालेमाणे ' इति पाठः टीकया प्रतिपूर्णमहोरात्रमिति व्याख्यातं, तत् केवलदिवसपौषधाक्षराणि क्व सन्तीति प्रश्नोऽत्रोत्तरं—उत्तराध्ययनसूत्रपञ्चमाध्ययने ' अगारिसामाइअंगाइ ' एतद्गाथावृत्त्यनुसारेण प्रतिपूर्णपौषधकरणं प्रायिकं ज्ञेयमिति ॥ १४० ॥

तथा—पौषधिकः पट्टपट्टिकालिखितप्रतिमां वासेन पूजयति न वा इति प्रश्नोऽत्रोत्तरं—पौषधिकः कारणं विना पट्टादिकं न पूजयतीति ज्ञेयमिति ॥ १४१ ॥

तथा—कर्म्मग्रन्थवृत्तौ ' जातिस्मरणमपि अतीतसंख्यातभवाऽवगमस्वरूपं मतिज्ञानमेवे ' त्युक्तमस्ति " पुव्वभवा सो पिच्छइ, इक्क दो तिन्नि जाव नवगं वा । उवरिं तस्स अविसओ, सहावओ जाइसरणस्स " ॥ १ ॥ इति गाथायां तु नवैव भवा जातिस्मरणस्य विषयस्तत्कथमिति प्रश्नो-

तथा—भरतैरवततीर्थकृद्व्यतिरिक्तानां तीर्थकृतां कीदृग् वर्णविभाग इति प्रश्नोऽत्रोत्तरं—पञ्चवर्णान्यतरवर्णरूपो वर्णविभागो ज्ञेयोऽत्रापि पूर्वोक्त एव हेतुरिति ॥ १९० ॥

तथा—श्रीवज्रस्वामिना पटविद्यया सङ्घः सुभिक्षदेशे नीत, तत्र सङ्घः किं चतुर्विध साधुसाध्वीमात्रसमुदायो वा ? पटविद्या च किंस्वरूपेति प्रश्नोऽत्रोत्तरं—परिशिष्टपर्वाद्युक्तवज्रस्वामिसम्बन्धानुसारेण चतुर्विधसङ्घोऽवसीयते, नतु साधुसाध्वीरूप एव, तथा—यया चक्रवर्त्ति चर्मरत्नवद्विवक्षितविस्तार पटो भवति सा पटविद्येति ॥ १९१ ॥

तथा—देवानां भवधारणीयेनापि वपुषा कादाचित्कमत्रागमन सम्भवति न वा इति प्रश्नोऽत्रोत्तरं—सङ्गमकसुरसम्बन्धाद्यनुसारेण देवाना भवधारणीयेनापि वपुषा कदाचिदत्रागमन ज्ञायत इति ॥ १९२ ॥

तथा—वंदित्तुवृत्तौ ' सत्ता फत्ता ' इति गाथावृत्तौ एकोनाशीतिमिथ्यात्वस्थानकेषु षट्षष्टितमस्थाने ' सर्व्वमासेषु वा तासूपवासादीनि ' सर्व्वास्वेकादशीषु उपवासकरणे कथं मिथ्यात्वमिति प्रश्नोऽत्रोत्तर—चतुर्दश्यष्टमीज्ञानपञ्चमीषु नियततपोदिनेषु उपवासमकृत्वा यदि सर्व्वास्वेकादशीषु उपवासं करोति सदा मिथ्यात्वस्थान भवतीति ज्ञायते इति ॥ १९३ ॥

तथा—गच्छान्तरीयसम्यक्त्वदेशविरत्युच्चारविधिपत्रेषु सम्यक्त्वोच्चारालापकप्रान्तवत् द्वादशव्रतोच्चारालापकप्रान्तेषु अपि रायाभियोगेणमित्यादिषडाकारोच्चारणमस्ति तद् यौक्तिकमन्यथा वा इति प्रश्नोऽत्रोत्तरं—आवश्यकनिर्युक्त्युपासकदशाङ्गादौ श्रावकाणां सम्यक्त्वोच्चार एव षडाकारा उक्ता सन्ति, न तु द्वादशव्रतोच्चारे, तेन सम्यक्त्वोच्चार एव राजाभियोगादिषडाकारोच्चारणं युक्तिमत्प्रतिभातीति ॥ १९४ ॥

तथा—चिरकालीनाल्पकालीननिगोदजीवानां दुःखं प्रति किं साम्यं हीनाधिकत्वं वा इति प्रश्नोऽत्रोत्तरं—तेषां व्यवहारेण समानं दुःखमवसीयते, निश्चयस्तु केवलिगम्य इति ॥ १४४ ॥

तथा—अनादिनिगोदजीवा किमनन्तबहुकर्म्मवशेन तत्र तिष्ठन्तीति प्रश्नोऽत्रोत्तरं—प्रवाहापेक्षया अनादिकर्म्मसम्भवेन तत्र तिष्ठन्तीति ॥ १४५ ॥

तथा—केचन निगोदजीवा लघुकर्म्मीभूय व्यवहारराशौ समायान्ति, तेषां तत्र लघुकर्म्मीभवने किं कारणमिति प्रश्नोऽत्रोत्तरं—तथाभव्यत्वपरिपाकादिकं तेषां लघुकर्म्मीभवने कारणमिति ॥ १४६ ॥

तथा—श्रीराजप्रश्नीये सूर्याभस्य शीघ्रगमननाम्नो वैक्रियविमानस्यान्तर्भूमिकावर्ण्णनाधिकारे पञ्चवर्णरत्नवर्ण्णने पञ्चवर्णा अशोककणवीरबन्धुजीवाः समानीताः सन्ति, वृत्तौ च प्रतीता इति व्याख्यातं, ते वृक्षाः के ?, किं च पुष्पादिकं तेषां पञ्चवर्णं भवतीति प्रश्नोऽत्रोत्तरं—अशोकादयो वृक्षा जीवाभिगमवृत्त्यादिषु पञ्चवर्ण्णा व्याख्याताः सन्ति, नतु तत्पुष्पादीनि, तेन तान्यपि तदनुसारेण ज्ञेयानीति ॥ १४७ ॥

तथा—'सज्झाय संदिसावु उपधि संदिसावु' इत्यादिषु संदिसावुंशब्देन किमुच्यते इति प्रश्नोऽत्रोत्तरं—संदिसावु इत्यस्यायमर्थः—सन्देशयामि—स्वाध्यायकरणोपधिप्रतिलेखनयोरादेशं मार्गयामीति ॥ १४८ ॥

तथा—वर्त्तमानचतुर्विंशतितीर्थकृतां 'पउमाभवासुपुज्ज रत्ते' ति रक्तादिवर्णविभाग किं शरीरेषु दृश्यमान उत ध्यानार्थं कल्पनामात्रमिति प्रश्नोऽत्रोत्तरं—एतद्गाथोक्तवर्ण्णविभागस्तीर्थकृतां शरीरगतो ज्ञेय इति ॥ १४९ ॥

तथा—अद्यतननिष्पन्नकटाहविकृतिर्भुज्यते तस्या कियन्त्यो विकृतया लगन्तीति प्रश्नोऽप्रोत्तर—एका कटाहविकृति-र्लगतीति ॥ २९० ॥

तथा—देवा मूलशरीरेण नग्नास्तिष्ठन्ति किं वा वस्त्राणि परिदधतीति प्रश्नोऽप्रोत्तरं—मूलशरीरेण वस्त्रपरिधाननिषेधो ज्ञातो नास्तीति ॥ २९१ ॥

तथा—दन्तधावनं कल्पवर्त्त च विधाय क्षामणकप्रतिक्रमणादिक कर्त्तुं शुद्ध्यति न वा इति प्रश्नोऽप्रोत्तरं—कारणे वेलामध्ये क्षामणक-प्रतिक्रमणादि कर्त्तुं शुद्ध्यतीति ॥ २९२ ॥

## अथ पण्डितमेघविजयगणिकृतप्रश्नास्तदुत्तराणि च ।

यथा—एकादशीवृद्धौ श्रीहीरविजयसूरीणां निर्वाणमहिमपौषधोपवासाविकृत्य पूर्वस्यामपरस्या वा किं विधेयमिति प्रश्नोऽप्रोत्तर—औदयिक्येकादश्यां श्रीहीरविजयसूरिनिर्वाणपौषधादि विधेयमिति ॥ २९३ ॥

तथा—सप्तदशभेदपूजादौ श्रीजिनगृहे चैत्यवन्दन कृत्वा यदोपविश्यते तदा किमीर्य्यापथिकीप्रतिक्रमणपूर्व्वकमेवान्यथा वा इति प्रश्नोऽप्रोत्तर—मुहूर्त्ताद्यवस्थानसम्भावनायामैर्यापथिकी प्रतिक्रम्यतेऽन्यथा तु यथावसरमिति ॥ २९४ ॥

तथा—केवलस्थापनाचार्यनिकटे प्रतिक्रमणं कुर्व्वन्त श्राद्धाश्च क्षामणावसरे कति वार क्षामयन्तीति प्रश्नोऽप्रोत्तर—केवलस्थापनाचार्याग्रे प्रतिक्रमणे श्राद्धा एकं क्षामणां कुर्व्वन्तीति ॥ २९५ ॥

तथा—वीरशासने आचार्यभूयापि किंसङ्ख्याका नरकगामिन सूरय उक्ता सन्ति ? तदक्षराणि च कुत्र ग्रन्थ इति सन्यासं प्रसाद्यमिति प्रश्नोऽत्रोत्तर—श्रीवीरशासने एतावत्सङ्ख्याका आचार्या नरकगामिन इति ग्रन्थे दृष्ट न स्मरति, किन्तु " तीआणागयकाले केई होहिंति गोअमा सूरी । जेसिं नामग्गहणे नियमेण होइ पच्छित्त " ॥ १ ॥ इति श्रीगच्छाचारप्रकीर्णके प्रोक्तमस्तीति ॥ ३९५ ॥

तथा—द्रव्यकषायाष्टमेदात्मनि ' जीवाजीवाना द्रव्यात्मे ' त्यत्राजीवेष्वात्मत्वाश कथा युक्त्या इति प्रश्नोऽत्रोत्तर—अतति सातत्येन गच्छति तांस्तान् पर्यायानित्यात्मा इति शब्दव्युत्पत्तिमाश्रित्य अजीवेष्वपि पुद्गलादिषु उपचाराद् द्रव्यात्मत्वव्यपदेश इति ॥ ३९६ ॥

## अथ वटपल्लीयपण्डितपद्मविजयगणिकृतप्रश्नास्तदुत्तराणि च—

यथा—सामाचार्यां चत्वारि पञ्च वा योजनानि गन्तुमागन्तुं च कल्पते इत्युक्तमस्ति तद्गमनागमनमाश्रित्य किं वा गमनमाश्रित्यैव वा इति प्रश्नोऽत्रोत्तरं—चतुर्मासकमध्ये ग्लानौषधादिककारणे चत्वारि पञ्च वा योजनानि गच्छति, तान्येवागच्छति, न तु ग्लानौषधादिकार्ये सम्पूर्णे सति क्षणमात्रमपि तत्र तिष्ठति, तथा—गोचर्यां तु यत्सक्रोश योजनमस्ति तद्गमनाऽऽगमनाभ्यां ज्ञेयमिति ॥ ३९७ ॥

तथा—' निद्रासमयमासाद्य, ताम्बूलं वदनात्त्यजेत् । भालात्पुष्पं स्त्रजो मूर्ध्न, पल्यङ्कात्प्रमदां त्यजेत् ॥ १ ॥ ' इत्यत्र को हेतुरिति प्रश्नोऽत्रोत्तरं—ताम्बूलत्यागे मुखदौर्गन्ध्यं १, तिलकत्यागे आयुषो हानि २, स्त्रगत्यागे सर्पभयं ३, प्रमदाऽत्यागे बलहानि ४, इति हेतु चतुष्टयी अस्तीति ॥ ३९८ ॥

तथा—देवो देवीं मूलशरीरेण भुङ्क्ते उत्तरवैक्रियेण वा इति प्रश्नोऽत्रोत्तरं—उभयथापि भोगो भवतीत्यक्षराणि श्रीभगवतीप्रज्ञापना-जीवाभिगमराजप्रश्नीयप्रमुखग्रन्थेषु सन्तीति ॥ ३९९ ॥

तथा—सप्तक्षेत्रीमुक्तद्रव्यान्त साधुसाध्वीद्रव्यस्य व्यय साधुसाध्वीनां कस्मिन् स्थाने योज्यते श्राद्धैरिति प्रश्नोऽत्रोत्तर—सप्तक्षेत्री मुक्तद्रव्यस्य व्यय साधुसाध्वीक्षेत्रयोरापन्नाणवैद्यानयनमार्गसहायकरणादिषु श्राद्धै कार्यत इति ॥ १७२ ॥

तथा—'तहेव काण काणं' ति वचनमुद्धाव्य न मिथ्यादृष्टेर्मिथ्यादृष्टित्ववचनव्यवहार कठिनवचनत्वादिति केचनापि प्रतिपादयन्ति इति प्रश्नोऽत्रोत्तरं—मिथ्यादृष्टेर्मिथ्यादृष्टिरिति कथनं तदकथन च यथासमयं विधेयमिति ॥ १७३ ॥

तथा—देवद्रव्यस्य वृद्धिकृते श्राद्धैस्तस्य व्याजेन गृह्यते न वा इति, तद्ग्राहकाणां दूषण किं वा भूषणमिति प्रश्नोऽत्रोत्तरं—श्राद्धाना देवद्रव्यस्य व्याजेन ग्रहणं न युज्यते, निःशूकताप्रसङ्गात्, नतु वाणिज्यादौ व्यापारणीय स्वल्पस्यापि देवद्रव्यभोगस्य सङ्काशसम्बन्धादिष्वतीवायतौ दुष्टविपाकजनकतया दर्शितत्वादिति ॥ १७४ ॥

तथा—उत्सूत्रभाषिप्रारब्धाष्टोत्तरीस्नात्रादौ स्वजनादिकारण विना सम्यग्दृशां तत्र गमने सम्यक्त्वस्य दूषण किं लगति न वा इति प्रश्नोऽत्रोत्तर—स्नात्रादौ गमने सम्यक्त्वस्य दूषण ज्ञातं नास्तीति ॥ १७५ ॥

## तथा पण्डितकनकविजयगणिकृतप्रश्नस्तदुत्तर च ।

यथा—पूर्वविध्युपधानवाहकस्य कृतचतुर्विधाहारोपवासस्य सन्ध्याप्रत्याख्यानवेलया सन्ध्याप्रत्याख्यान गुरुसमक्ष कर्त्तव्यं न वा इति प्रश्नोऽत्रोत्तर—प्रात कृतचतुर्विधाहारोपवासस्य सन्ध्यायामुपधानक्रियाकरणवेलाया पश्चात्प्रत्याख्यान कृत विलोक्यते, उपधानमन्तरा तु सन्ध्याया तत्स्मरण विलोक्यते, पर पुन प्रत्याख्यानकरणविशेषो ज्ञातो नास्तीति ॥ १७६ ॥

तथा—पृथग् श्राद्धानां मुखवस्त्रिकाग्रहणवर्णा कुत्र सन्तीति प्रश्नोऽत्रोत्तर—अहसममवणयगो, करनुअविहिपरिअ पुचिरयहरणो। परिर्पितिअ अह्यारे, महकुसं गुरुपुरो विअडे" ॥ १ ॥ इयं गाथा श्रावकप्रतिक्रमणाधिकारे योगशास्त्रतृतीयप्रकाशवृत्तौ वर्त्तते, एतदनुसारेण केनस्य श्राद्धस्य मुखवस्त्रिकाविग्रहणाक्षराणि ज्ञेयानि, अनुयोगद्वारसूत्रवृत्त्यादावपि उपनतान्येव तानि सन्तीति ॥ १६६ ॥

तथा—मतान्तरीये वेषधरे मिलिते प्रणते वा केचनात्मीयवाचंयमा मस्तकेन वन्दामीति वाइ इति कथयन्ति, केचन न कथयन्ति, तत्र या रीतिः सा प्रसाद्येति प्रश्नोऽत्रोत्तरं—अत्र पक्षान्तरीयैरात्मनां प्रणामकरणे यथावसरं विधेयमिति ॥ १६७ ॥

तथा—द्वादशव्रतपौषधवहने श्राद्धाना प्रारम्भवासरे किमाचामाम्लं कार्यतेऽथ चैकाशनकं ? तथा भोजने चार्द्रशाकादिग्रहणं कल्पते न वा इति प्रश्नोऽत्रोत्तरं—श्राद्धाना द्वादशव्रतपौषधवहने यथाशक्ति तपो विधेयं, तथाऽऽर्द्रशाकभक्षणं तु कारणं विना न कल्पते इति ॥ १६८ ॥

## अथ पण्डितश्रुतसागरगणिकृतप्रश्नास्तदुत्तराणि च ।

तथा—मूलकपत्राणामनन्तकायित्वमुत प्रत्येकत्वमिति प्रश्नोऽत्रोत्तरं—मूलकमध्ये कन्दस्यैवानन्तकायिकत्वं, न तु तत्पत्रादीनामिति ॥१६९॥

तथा-उत्सूत्रभाषिणां सम्यग्दृष्टित्वमुत मिथ्यादृष्टित्वमिति प्रश्नोऽत्रोत्तर—उत्सूत्रभाषिणां मिथ्यादृष्टित्वमाश्रित्य विप्रतिपत्तिः क्वापि नास्ति, सूत्रोक्तस्यैकस्याप्यरोचनादक्षरस्य भवति नरः । मिथ्यादृष्टि' रित्यादिवचनादिति ॥ १७० ॥

तथा—वेषभूयकृतमानितग्रन्थेन तस्य सांवत्सरिकमुद्दिश्य सांवत्सरिकादिपौषधिकाद्यग्रणे सम्यग्दृशां तत्र भोजनमुचितमनुचितं वा इति प्रश्नोऽत्रोत्तर—वेषभूयकृतसांवत्सरिकवासरकृत्यं किञ्चित्पृथक्कृत्य यदि पौषधिकान् जेमयति तदा तत्र गमनं सम्यग्दृशामुचितमेवास्तीतरथा तु नेति, साम्प्रतं प्रवृत्तिरपि महानगरादिष्वेवमेवास्तीति ॥ १७१ ॥

तथा—'देसिअ राइअ पक्खिये'ति कायोत्सर्गनिर्युक्तिगतचतुर्नवतितमगाथायां हारिभद्र्यां वृत्तौ व्याख्यातोऽस्ति, तत्रैकैकस्मिन् प्रतिक्रमणे त्रयो गमा प्रतिपादिता सन्ति, ते पञ्चस्वपि प्रतिक्रमणेषु यथास्थान यथा समाप्ता गमा भवन्ति तथा व्यक्त्या प्रसाद्या इति

प्रश्नोऽप्रोत्तर—दैवसिकादिषु पञ्चसु प्रतिक्रमणेषु प्रारम्भानन्तर यत्प्रथम 'करोमि भंते!' इत्याद्युच्चारणं स प्रथमगमप्रारम्भ, तदनु प्रतिक्रमणसूत्र पठनावसरे यत् 'करोमि भंते!' इत्याद्युच्चारण स द्वितीयगमप्रारम्भस्तस्योच्चारादर्वाक् प्रथमगमस्य समाप्ति, तथ तृतीयवेलायां यत् 'करेमि भंते!' इत्याद्युच्चारणं स तृतीयगमस्य प्रारम्भस्तस्य पूर्वं तु द्वितीयगमस्य समाप्ति, तृतीयगमसमाप्तिस्तु तत्प्रतिक्रमणसमाप्तिं यावदिति श्रीआवश्यक-बृहद्वृत्त्यनुसारेणावसीयत इति ॥ १८१ ॥

तथा—अश्रुत्वाकेवलिनस्तीर्थे भवन्ति तीर्थविच्छेदे वा भवन्ति ', यदि तद्विच्छेदे भवान्ति तदा पाक्षिकसूत्रवृत्तौ अतीर्थेऽन्तकृत्केवलिनो भूत्वा सिद्ध्यन्ति, भगवत्यां च नवमशतके तदाश्रित्य 'तप्पक्खियसावगस्स तप्पक्खियसाविया एवे' त्यत्र धर्मोपदेशं न दत्ते, एक प्रश्नं ज्ञातमेकं च मुक्त्वेत्यभिप्रायेणाश्रुत्वाकेवलिनस्तीर्थे एव भवन्ति। अन्यथाश्रुत्वाकेवलिन पञ्चदशभेदभिन्नाना सिद्धाना मध्ये कस्मिन् भेदे समायान्ति, तेनैतद्विषये सर्वं सविस्तर प्रसाद्यमिति

प्रश्नोऽप्रोत्तर—अश्रुत्वाकेवलिन श्रीभगवतीसूत्रवृत्त्यनुसारेण तीर्थे एव भवन्ति, नातीर्थे। पाक्षिक-सूत्रवृत्तौ तु अतीर्थसिद्धाधिकार एते उक्ता न सन्तीति, तथा ते तीर्थसिद्धादिमध्ये यथासम्भवमवतरन्तीति ॥ १८२ ॥

तथा—आचाराङ्गलोकसाराध्ययनपञ्चमोद्देशकादिमसूत्रे ह्रदोपमेनाचार्येण भाव्यमित्यत्र वृत्तौ धर्ममाश्रित्य चतुर्भङ्ग्यां प्रत्येकबुद्धास्तु-भयाभावाच्चतुर्थभङ्गस्था इत्युक्तप्रकारेण सर्वेऽपि प्रत्येकबुद्धा धर्मोपदेश न ददत्येतत्कथं सङ्गच्छतीति, यत —ऋषिमण्डलसूत्रे " पत्तेअबुद्ध-साहू, नमिमो जे भासिउ सिव पत्ता। पणयालीस इसिभासियाइं अज्झयणपवराइं ॥ १ ॥ " इति गाथाया प्रत्येकबुद्धानामध्ययनमुक्तमिति किमत्र

## श्रीविजयसेनसूरिसत्कपण्डितकनकविजयगणिकृतप्रश्नास्तदुत्तराणि च ।

यथा—षष्ठादौ प्रत्याख्याने भक्तद्वयकथनाभिप्रायस्य किं प्रयोजनमिति प्रश्नोऽत्रोत्तर—सामान्यत सदा द्विवारं भोजन लोकप्रतीतमित्यु-पवासद्वयेन भोजनचतुष्टय, भोजनद्वय च पारणोत्तरपारणयोरेकाशनपूर्वकं कार्यते इति ॥ १७७ ॥

तथा—वीरात् कियन्तो दुर्भिक्षा अभवन् ? यत केऽप्येवं कथयन्ति यद्दुर्भिक्षद्वयमभवत् , परिशिष्टपर्वादौ च बहव सन्तीति प्रश्नोऽत्रोत्तर—वीरात् अर्वाग् दुष्काला भूयांसो बभूवु , परं साक्षात् द्वादशाब्दुष्कालत्रयं शास्त्रे प्रोक्त दृश्यते, तत्र परिशिष्टपर्वणि द्वयं, नन्दीवृत्तौ चैक इति। ये तु दुष्कालद्वयमेव कथयन्ति तस्मिन् शास्त्रे वर्तते तन्नाम ज्ञापनीयं, पश्चात्तदुत्तरविषये ज्ञास्यत इति ॥ १७८ ॥

तथा—सार्द्धत्रिकोट्य पुत्रपौत्रा कृष्णस्य, भरतस्य तु सपादा कोटि, तत्र कालस्तु पतनशीलोऽस्ति, तत्कथमाविनयं सआयर्तीति प्रश्नोऽत्रोत्तर—द्वारकानगर्यां सार्द्धत्रिकोट्य कुमारा प्रोक्तास्सन्ति, ते चानेकेषां यदुवंशीयाना पुत्रा न त्वेकस्यैव कृष्णस्य, भरतस्य तु सपादकोटि पुत्रा इति न कोऽप्यसम्भावनेति ॥ १७९ ॥

## अथ पण्डितदयाविजयगणिगुणविजयगणिकृतप्रश्नास्तदुत्तराणि च ।

यथा—दर्शनसम्यक्त्वयो क प्रतिविशेष ? येन द्वयोरप्यतीचारा , परमार्थत परस्पर केचन सदृशा एव दृश्यन्ते, तेन तयोर्व्यक्त्या भेद प्रसाद्य इति प्रश्नोऽत्रोत्तर—दर्शनसम्यक्त्वयोर्वस्तुगत्याऽभेदेऽपि कथञ्चित् शङ्कित्वाद्यभाव एव सम्यक्त्वातिचार उच्यते, शङ्कादिसद्भावस्तु दर्शनातिचार इति व्यक्त प्रवचनसारोद्धारवृत्तौ षष्ठे द्वारे ॥ १८० ॥

तथा—तीर्थकृद्दीयमाने दाने वरघोषणायां सत्यां श्रावको योषिच्च तद्दानं गृहीतो नवा इति प्रश्नोऽप्रोत्तरं—तीर्थकृद्दानसमये ज्ञाता धर्मकथादिषु सनाथानाथपथिककार्पटिकादीनां याचकानां ग्रहणाधिकारो दृश्यते, न तु व्यवहारिणा, तेन श्रावकोऽपि कश्चिद्यदि याचकीभूय गृह्णाति तदा गृह्णातु, योषितस्तु प्रायस्तत्राधिकारो न दृश्यते इति ॥ ३८९ ॥

तथा—बलदेव १ कर्ण २ द्वीपायन ३ शाखा ४ स्या आगमिष्यच्चतुर्विंशतौ तीर्थकृतो भविष्यन्ति, ते किं नवमराम १ कौंतेय २ द्वारकादाहक ३ श्रीवीरप्रथमश्रावका एव अथवा किमन्ये वा इति प्रश्नोऽप्रोत्तर—शख श्रीवीरप्रथमश्रावकादन्यस्तीर्थकृत् श्रीस्थानाङ्गवृत्तौ उक्तोऽस्ति, द्वैपायनो द्वारिकादाहकोऽन्यो वा इति निर्णय केवलिगम्य, कृष्णभ्राता बलदेव आवश्यकनिर्युक्त्यादावागमिष्यच्चतुर्विंशतिकायां कृष्णतीर्थे सेत्स्यमुक्तोऽस्ति, तेन बलदेव कश्चिन्नामान्तरेणावगन्तव्य, कर्णस्थाने तु शास्त्रे कृष्ण प्रोक्तोऽस्ति, सोऽपि नामान्तरेण बोध्योऽत एव शास्त्रान्तरे सह विसंवाद सम्भाव्य प्रवचनसारोद्धारवृत्तिकारेणापि द्विरा एव भावितीर्थकृज्जीवा व्यक्तया विवृता सन्ति, न शेषा इति ॥१९०॥

## अथ पण्डितचन्द्रविजयगणिकृतप्रश्नास्तदुत्तराणि च ।

यथा—तीर्थङ्करस्य सामान्यकेवलिनो वा वीर्यान्तराय सदृगेव क्षयङ्गत तत्कथ सामर्थ्ये न्यूनाधिक्य दृश्यत इति प्रश्नोऽप्रोत्तर—तीर्थकृत्केवलिना सामान्यकेवलिना च वीर्यान्तरायकर्मक्षयजनितस्यात्मवीर्यस्य समानत्वेऽपि नामकर्मभेदरूपशरीरलक्षणबाह्योपकरणभेदाद्बले भेद, अत एव सामान्यकेवलिशरीरेभ्यस्तीर्थङ्करशरीरमनन्तबलवत्, जीर्णतुलादृष्टान्तोऽत्र भावनीय इति ॥ १९१ ॥

तथा—श्रीज्ञातासूत्रप्रथमाध्ययने मेघकुमारमातुरकालमेघदोहद समुत्पन्न इत्युक्तं तत्कथ घटते ?, तदा वर्षाकालस्य विद्यमानत्वादिति प्रश्नोऽप्रोत्तर—ज्ञातासूत्रोक्तपञ्चवर्णाद्युपेतमेघस्य देवप्रभावसाध्यस्य वर्षास्वपि अकाल एवेति धारिण्या अकालमेघदोहदोत्पत्तिरुक्तेति ॥ १९२ ॥

सत्त्वमिति प्रश्नोऽत्रोत्तर—आचाराङ्गसूत्रानुसारेण प्रत्येकबुद्धा समासम्बन्धेन धर्म्मोपदेश न ददतीत्यवसीयते, ऋषिमण्डले तु तेषामध्ययन-प्रणयनरूपधर्मोपदेश इति न किमप्यनुपपन्न इति ॥ १८३ ॥

तथा—स्वपक्षीये परपक्षीयैर्वा श्राद्धै कृतस्वाध्यायो मण्डल्यां क्रियान्त आत्मीयश्राद्धानां कल्पते न वा इति प्रश्नोऽत्रोत्तर—धामस्य कृतस्वाध्यायो यतीनां श्राद्धानां च क्रियामध्ये न शुद्ध्यतीति ॥ १८४ ॥

तथा—परपक्षीयशेषधारिकृतसाम्प्रतीनस्तुतिस्तोत्रस्वाध्यायादि स्वपक्षीयवाचंयमानां क्रियान्त मण्डल्यां कथ्यमान कल्पते न वा इति प्रश्नोऽत्रोत्तरं—आधुनिकपरपक्षीयकृतस्तुतिस्तोत्रस्वाध्यायादि क्रियान्त कथ्यमानं न शुद्ध्यतीति ॥ १८५ ॥

तथा—चतुःशरणप्रकीर्णकस्य गुणनं व्रतिना श्राद्धाना च कालवेलाया अस्वाध्यायदिने च शुद्ध्यति न वा इति प्रश्नोऽत्रोत्तर—चतु-शरणप्रकीर्णकस्य गुणन कालवेलायामपि कल्पते, अस्वाध्यायदिनेऽपि कल्पत इति ॥ १८६ ॥

तथा—अवधिज्ञानिनो मनःपर्यवज्ञानिनो वा कियतो भवान् कुर्वन्तीति प्रश्नोऽत्रोत्तर—" आभिणिबोहियनाणिस्स ण भंते ! अंतर कालओ केवचिरं होइ ', गोयमा ! जहन्नेण अंतोमुहुत्तं उक्कोसेण अणंतं कालं जाव अवड्ढपोग्गलपरियट्टं च देसूणं । सुअनाणिओहिनाणि मणपज्जवनाणीणं एवं चेव, केवलनाणिस्स नत्थि अंतर " इत्यादिभगवतीसूत्राष्टमशतकद्वितीयोद्देशके, एतदक्षरानुसारेण अवधिज्ञानिनो मनःपर्यवज्ञानिनो वा अनन्तभवान् कुर्वन्तीति ज्ञायत इति ॥ १८७ ॥

## अथ पण्डितश्रीगुणविजयगणिकृतप्रश्नास्तदुत्तराणि च ।

यथा—अभव्य पादपोपगमनाख्यमनशन करोति नवा इति प्रश्नोऽत्रोत्तर—अभव्यो यथा द्रव्यतो नवमग्रैवेयकायुर्बन्धयोग्य सम्यक् सामाचारीक-चारित्र पालयति तथा पादपोपगमनानशनमपि करोतीति तस्याऽसम्भवो नास्तीति ॥ १८८ ॥

प्रश्नोऽत्रोत्तर—आचलिकप्रतिष्ठिता अपि प्रतिमा द्वादशजल्पपट्टकानुसारेण गुरुवत्
तथा—आचलिकप्रतिष्ठिता प्रतिमा पूज्या न वा इति
नात्पूज्या एव 'तम्हा सव्वानुन्ना सव्वनिसेहो च पवयणे नत्थि' इत्याद्युक्तिरत्रानुस्मरणीयेति ॥ ३९८ ॥
तथा—चत्वारो लोकपालाश्चतुर्णां निकायानां मध्ये कस्मिन्निकायमध्य इति प्रश्नोऽत्रोत्तर—वैमानिकभवनपतिलक्षणे निकायद्वये लोकपालचतुष्कसद्भाव सङ्ग्रहणीवृत्त्यादावुक्तोऽस्तीति ॥ ३९९ ॥
तथा—श्रुतदेवीभवनदेवीनां कायोत्सर्गों कुत्र प्रोक्तास्सन्तीति प्रश्नोऽत्रोत्तरं—श्रुतदेवताभवनदेवताना कायोत्सर्गा आवश्यकचूर्णि पञ्चवस्तुकवृत्त्यादिष्वनेकेष्वागमप्रकरणेषूक्तास्सन्तीति ॥ ४०० ॥
तथा—श्राद्धाना पूजावसरेऽष्टपुटमुखकोशबन्ध प्रोक्तोऽस्ति स कया रीत्या बध्यते ?, वस्त्रद्वयी यदा भवति पूजकस्य शरीरे तदोत्तरीया ञ्चलेनैव वा बध्यते इति प्रश्नोऽत्रोत्तर—पूजावसरे श्राद्धैरष्टपुटमुखकोशबन्ध उत्तरीयाञ्चलेन कर्त्तव्यो न तु तृतीयवस्त्रेण, यत श्राद्धविधौ देवपूजावसरे श्राद्धानां परिधानोत्तरीयलक्षण वस्त्रद्वय श्राद्धीनां च कञ्चुकसहित तत्त्रयमेवोक्तमस्ति, नत्वधिक, तथोत्तरीयमपि तत्कारणयोस्यमेव विधेय, तेन न वस्त्रेण मुखकोशबन्ध कर्त्तुं न शक्यते, यदि तृतीयं वस्त्र मुखकोशन चनिमित्त भवति तदा युक्तमुत्तरीयाञ्चलेनैव वा बध्यते इति किमप्यशक्यामिति ॥ ४०१ ॥

## अथ पण्डितश्रीसत्यसौभाग्यगणिकृतप्रश्नौ तदुत्तरे च ।

यथा—उत्कृष्टचैत्यवन्दनविधावुत्तरोत्तर स्तुतयो वर्णवृद्धा विधीयन्ते न स्वरूपा इति रूढि सत्याऽसत्या वेति, प्रश्नोऽत्रोत्तर—उत्कृष्ट-चैत्यवन्दनविधावुत्तरोत्तर स्तुतय प्रायो वर्णवृद्धा एव विधेया इति परम्परा वर्त्तते, तेन रूढि सत्यैवावसीयते। परम्परामूलं तु 'नमोऽस्तु वर्द्धमानाय'

तथा—केनचित् श्राद्धेन योजनशतादुपरि गमनप्रत्याख्यानं कृतं, तस्य धर्मार्थमाधिकं गन्तुं कल्पते नवा ?, यदि गच्छति तदा केन विधिनेति प्रश्नोऽत्रोत्तरं—प्रत्याख्यानकरणसमये विवेको विलोक्यते, तेन प्रायो मुख्यवृत्त्या प्रत्याख्यानं सांसारिकारम्भस्य भवति, न तु धर्म्मकृत्यस्य, यदि च सामान्यतः कृतं तदा नियमितक्षेत्रोपरि यतनया गच्छति, तत्र च गतः सांसारिककृत्यं न करोतीति ॥ १९३ ॥

तथा—पौषधकारिणः श्राद्धाः कियतीं भुवं यावद्यान्तीति प्रश्नोऽत्रोत्तरं—पौषधकारिणः श्राद्धाः ईर्यासमित्यादिना धर्म्मार्थं यथेष्टं व्रजन्ति, न चात्र भूमानियम इति ॥ १९४ ॥

## अथ पण्डितअमरचन्द्रगणिकृतप्रश्नोत्तराणि ।

यथा—चन्द्रप्रभप्रतिमानां कस्तूरीलेपः क्रियते नवा इति प्रश्नोऽत्रोत्तरं—जिनप्रतिमानां कस्तूरीलेपो न क्रियत इत्यक्षराणि न सन्ति, प्रत्युत सामान्यतस्तत्करणाक्षराणि श्राद्धविध्यादौ सन्ति, यक्षकर्दममध्यगता तु कस्तूरी साम्प्रतमपि जिनार्चने व्यापार्यमाणा दृश्यत इति ॥ १९५ ॥

तथा—सन्ध्याप्रतिक्रमणवत्प्रातःप्रतिक्रमणे श्राद्धानां प्रतिक्रमणसूत्रादेशो न दीयते तत्र को हेतुरिति प्रश्नोऽत्रोत्तरं—प्रातः प्रतिक्रमणं महास्वरेण न कर्तव्यमिति आगमीयारीति, श्राद्धानामादेशदानेतु ते प्रतिक्रमणसूत्रश्रावणार्थं । महास्वरेण कथयन्तीति तद्विक्षेपः स्यादिति प्रातः प्रतिक्रमणादेशो न दीयतेति ॥ १९६ ॥

तथा—श्राद्धानां गोत्रदेवीपूजने मिथ्यात्वं लगति नवा इति, प्रश्नोऽत्रोत्तरं—यस्य तथाविधं धैर्यं भवति तेन गोत्रदेवी न पूजनीया एव, कुमारपालवत्, तदभावे तु कदाचित्पूजनेऽप्युच्चारितसम्यक्त्वभङ्गो न भवति, यतो देवताभियोगेनेति सम्यक्त्वोच्चारे छिण्डिकाऽप्यस्तीति ॥ १९७ ॥

श्राद्धानां तु तमन्तरेणैव पाठ , तत्र किं शास्त्र मदीय

तथा—चतुश्शरणाध्यापनमुपासकानां कथं कार्यते, यतीनां योग विना तदनध्याय

किं वा गच्छसामाचारीति प्रश्नोऽत्रोत्तर—चतुश्शरणादीनि चत्वारि प्रकीर्णकानि आवश्यकवत्प्रतिक्रमणक्रियादिपु बहूपयोगित्वादुपधानयोगोद्वहन अन्तरेणापि परम्परयाऽधीयमानानि सन्ति सैव तत्र प्रमाणमिति ॥ ४०७ ॥

तथा—मूर्तैः कर्म्मभिरमूर्तस्य जीवस्य वह्न्य पिण्डन्यायेन कथं सम्बन्ध इति प्रश्नोऽत्रोत्तरम्—अरूपिभि सह रूपाणां सयोगस्सम्भवत्येव, यथाऽऽकाशेन सह परमाणूनां पक्षिणां वा, वह्न्य पिण्डन्यायेन तु सम्बन्धविशेषो व्यवस्थाप्यते, न तु रूपिद्वयनियत सम्बन्ध इति न किञ्चि-दनुपपन्नम् ॥ ४०८ ॥

तथा—मत्स्यकच्छपवृपमहिषशुकसारसादिजलचरस्थलचरखचरतिरश्चामायुषो गर्भस्थितेश्च कियती परिमितिरिति प्रश्नोऽत्रोत्तरम्—जल-चरस्थलचरखचरतिरश्चामायुर्मान ' गब्भभुअजलयरोभयेत्यादि ' सङ्ग्रहणीगाथातो " मणुआऊसम गयाई, हयाइ चउरसऽजाउ अट्ठसा । गोमहि मुट्ठसराई, पणससाणाइ दसमसा ॥ १ ॥ " इति वीरजयसेहरपयेति क्षेत्रविचारगाथातश्चावसेयं, तेषां गर्भस्थितिमान तु जघन्यतोऽन्तर्मुहूर्त्त मुत्कर्षतश्चाष्टौ वर्षाणीति भगवत्यादौ प्रतिपादितमस्तीति ॥ ४०९ ॥

तथा—चतुर्दशनियमेपु द्विशादीनि सचित्तादीनि प्रात प्रत्याख्याने क्रियमाणे मुत्कलानि रक्षितानि, तानि स्वहन्येव सर्व्वाण्यपि पूर्णी-भूतानि, अथ रात्रौ तेषां कार्ये समुत्पन्ने पूर्व्वप्रमाणीकृतादप्यपराण्यादातुं कल्पन्ते न वा इति प्रश्नोऽत्रोत्तर—श्राद्धाना चतुर्दशनियमेपु द्विशादीनि सचित्तानि प्रात प्रत्याख्यानसमयेऽहोरात्रावधि मुत्कलानि रक्षितानि भवन्ति तदा तावता दिवापरिभोगे रात्र्यावधिकानि न कल्पन्ते, यदि च सन्ध्याऽवध्येव तथन्ति मुत्कलानि रक्षितानि तदा रात्र्यावधिकान्यपि कल्पन्ते इति ॥ ४१० ॥

स्यस्याधिकारे 'ताओ अ पुंईओ एगसिलोगादिवड्डिआओ पयअक्खरादीहिं वा सरेण वा वड्डेण तिन्नि भणिऊण' मित्य यावस्यकचूर्ण्य क्षरदर्शनमिति सम्भाव्यत इति ॥ ४०२ ॥

तथा—भुवनसुरीसृविकयोस्सर्माक्षन् पाक्षिकप्रतिक्रमणे 'ज्ञानादिगुणयुताना' इति स्तुति श्राविकाभिरपि पठ्यते न वा इति, प्रश्नोऽत्रो-त्तरं—पाक्षिकप्रतिक्रमणे 'ज्ञानादिगुणयुतानां' इति स्तुतिः श्राविकाभि साध्वीभिरपि च कथ्यमानाऽस्तीति ॥ ४०३ ॥

## अथ पण्डितजीवविजयगणिकृतप्रश्नौ तदुत्तरे च ।

यथा—अत्यह प्रस्तावनविहारे पञ्चशतीवीसलप्रियाणा भोग कथितोऽस्ति तन्नाणकं किंनामक कथ्यते इति प्रश्नोऽत्रोत्तर—वीसलदेवेन राज्ञा पातितं वीसलप्रियनामकं तत्कालीन कश्चिन्नाणकविशेष सम्भाव्यते, तदधुना प्रसिद्ध नास्ति, पर षट्त्रिंशन्मूटकद्रम्मैर्वीसलप्रियनाणक अष्टशतविंश-तिसहस्राधिकत्रिषष्टिलक्षप्रमाणं कथितमस्तीति ॥ ४०४ ॥

तथा—श्राविका जिनालये गृहदेवावसरे च प्रतिमाया प्रक्षालनं करोति नवा इति, तथा यौवनावस्थायां देवपूजां करोति न वा इति, प्रश्नोऽत्रोत्तरं—देवगृहे देवावसरे च श्राविका प्रतिमाया प्रक्षालनं करोति, तथा यौवनावस्थायां पूजामपि करोतीति, यथा ज्ञाताधर्म्मकथाङ्गे द्रौपद्य यौवनावस्थायां स्नपनपूर्व्वकं पूजा कृतेति बोध्यम् ॥ ४०५ ॥

## अथ पण्डितजससागरकृतप्रश्नास्तदुत्तराणि च ।

तथा—तीर्थकृत्समवसरणे बलि राद्धोऽराद्धो वा ? गच्छे चापकाया मठे प्ररूपण, मलयगिरिविरचितावश्यकवृत्तौ तु बलि सिद्ध कथितोऽस्तीति प्रश्नोऽत्रोत्तरं—तीर्थकृत्समवसरणे बलि राद्धोऽवसीयते इति ॥ ४०६ ॥

तथा—केनापि स्वगृहं जिनगृहे मुक्तं, तत्र श्राद्धः कोऽपि भाटकं दत्वा तिष्ठति न वा इति प्रश्नोऽत्रोत्तरं—यद्यपि साधिकभाटकप्रदान-पूर्वकमवस्थाने दोषो न लगति, तथापि तथाविधकारणमन्तरेव युक्तिमन्न प्रतिभाति, देवद्रव्यभोगादौ निश्शूकताप्रसङ्गादिति ॥ ४१६ ॥

तथा—कोऽप्युपधानचतुष्कमुद्वाह्य माल्यं परिदधाति तस्य समुद्देशानुज्ञावस्थायामवशिष्टोपधानयोर्नाम गृह्यते न वा इति प्रश्नोऽत्रोत्तरं—षण्णामप्युपधानानां समुद्देशानुज्ञयोर्नाम गृह्यते, द्वयोर्द्देशस्य च पुरतोऽपि भवने न दोष इति वृद्धसम्प्रदायः ॥ ४१७ ॥

तथा—सुषेणसेनापतिस्तिमिश्रागुहाया कपाटोद्घाटनसमये कियद्भूमिं पश्चादपसरतीति प्रश्नोऽत्रोत्तरं—कपाटपूर्णां कृत्वा प्रहारदानार्थं सप्ताष्टपदानि पश्चादपसरतीति, कपाटोद्घाटनसमये द्वादशयोजनावधि सेनानीरत्नतुरगापसरणप्रवादस्तु अनागमिक', आवश्यकटिप्पनके तथा भणनादिति ॥ ४१८ ॥

तथा—सर्व्वचक्रवर्तिनां सर्व्वरत्नानि प्रमाणतस्तुल्यानि न्यूनाधिकानि वा इति प्रश्नोऽत्रोत्तरं—सर्व्वचक्रवर्तिनां काकिण्यादिरत्नानि कियन्ति केषाञ्चिन्मते प्रमाणाङ्गुलमाननिष्पन्नानि, कियन्ति तु तत्कालीनपुरुषादिमानोचितमानानि, केषाञ्चिन्मते तु सर्व्वाण्यपि तत्कालोचित-मानानीति ॥ ४१९ ॥

तथा—सायस्तनिकादीनां प्रतिक्रमणकरणोदीरणा क्रियते त्रिवारं सामायिकादिदण्डकं चोच्चार्यते तद्युक्तमयुक्तं वा इति प्रश्नो-ऽत्रोत्तरं—सायस्तनिकादीनां प्रतिक्रमणकरणोदीरणाकरणं न युक्तं, यदि च ते स्वयं प्रतिक्रमणं कुर्व्वन्ति चोपधादिदण्डकं त्रिवारमुच्चरन्ति तदा द्रव्यक्षेत्रकालभावानुसारेणानुकूल्यादिगुणसम्भवः स्यात्तदोच्चार्यते, यस्माच्छास्त्रेऽप्येवं दृश्यते 'तम्हा सठ्ठाणुन्ना सव्वनिसेहो अ पवयणे नत्थि' इति ॥ ४२० ॥

तथा—बन्धुजीवकशब्देन किमुच्यते 'बिडुरिओ' इति वृक्षस्य पुष्पमन्यद्वेति प्रश्नोऽत्रोत्तर—बन्धुजीवकशब्देन बन्धुजीवकपुष्पं शास्त्रे प्रोक्तमस्ति, लोकमध्ये तु 'बपोरिओ' वृक्ष इति कथितमस्तीति ॥ ४११ ॥

तथा—चण्डरुद्राचार्यो शिष्यस्य स्कन्धे उपविश्य चलिता इति सत्यमसत्यं वा इति प्रश्नोऽत्रोत्तरं—श्रीउत्तराध्ययनवृत्तिप्रमुख बहुग्रन्थानुसारेण चण्डरुद्राचार्येण शिष्यस्य कथितं त्वमग्रतो गमनं कुरु, पश्चात्सोऽग्रतश्चलित, चण्डरुद्राचार्यास्तु पृष्ठतश्चलिता, कस्मिंश्चिद्ग्रन्थे कथितमस्ति यच्छिष्यस्य स्कन्धे भुजां दत्त्वा चलिता इति ॥ ४१२ ॥

तथा—बदरीजम्ब्वोरसङ्ख्याता जीवा एको वा इति प्रश्नोऽत्रोत्तरं-प्रज्ञापनायां प्रथमपदे गुच्छाधिकारे आउच्छिन्दरयोर्मूलकन्दस्कन्ध त्वक्शालाप्रवालेषु प्रत्येकमसङ्ख्येयजीवात्मकता प्रोक्ताऽस्ति, तदनुसारेण बदरीजम्ब्वोरपि पद्स्वपि स्थानेषु असङ्ख्याता जीवास्सम्भाव्यन्ते, न तु न्यूनाधिकजीवत्वेति ॥ ४१३ ॥

तथा—'एगभवग्गहणेणं सयसहस्सपुहुत्ताइं' इत्यत्र पृथक्त्वशब्देन का सङ्ख्या इति प्रश्नोऽत्रोत्तरं—एकस्मिन् भवे 'सयसहस्सपुहुत्त' इत्यत्र पृथक्त्वशब्दो बहुत्ववाचको, नो चेद्वीन्द्रियामेकसंयोगेऽपि शतसहस्रपृथक्त्वोत्पत्तिर्निष्पत्तिश्च मत्स्यादीनां मनुष्याणां चोत्पत्ति प्रतिपादिता तथा भवे का वार्ता? तेन दिवसमुहुत्तपुहुत्ता इत्यत्रैवात्र पृथक्त्वशब्दस्य बहुत्वार्थकत्वमेवेत्यवसेयम् ॥ ४१४ ॥

## अथ पण्डितहर्षचन्द्रगणिकृतप्रश्नास्तदुत्तराणि च ।

यथा—श्रीजिनेन्द्राम्बा जिनेन्द्रप्रसवनानन्तरमपत्यं प्रसूते न वा इति प्रश्नोऽत्रोत्तरं—एकान्तो ज्ञातो नास्ति, नेमिनाथादीनां रथनेम्यादे-र्लघुभ्रातृतया प्रतीतत्वादिति ॥ ४१५ ॥

' देसावगासिअ उपभोगपरिभोगं पच्चक्खामि"

तथा देशावकाशिकेन सह सामायिकमुच्चरति न वा ? इति, प्रश्नोऽत्रोत्तरं—देशावकाशिकोच्चरणविधि इत्यादिको दृश्यते, परं पारणविधिर्ज्ञातो नास्ति, तथा देशावकाशिकमध्ये सामायिकस्य ग्रहणं पारणं च शुद्ध्यति, तेन सह सामायिकग्रहण-मपि शुद्ध्यतीति ॥ ४२६ ॥

तथा—उपधाने पाळीपरावर्तनं शुद्ध्यति न वा इति प्रश्नोऽत्रोत्तरं—तथाविधकारणे तत्प्रत्याख्यानं शुद्ध्यतीति ॥ ४२७ ॥

## अथ पण्डितधर्मविजयगणिकृतप्रश्नौ तदुत्तरे च ।

तथा—आराधना श्रीराणपुरप्रतिष्ठाकृत्श्रीसोमसुन्दरसूरिकृता किंवा श्रीसोमप्रभसूरिकृता इति, प्रश्नोऽत्रोत्तरं—आराधनासूत्रं सप्त-त्वारिंशत्तमपट्टे श्रीसोमप्रभसूरिकृतमिति ॥ ४२८ ॥

तथा—देववन्दने पूर्वं घण्टां वादयन्ति पश्चाद्वा इति प्रश्नोऽत्रोत्तरं—अन्यद्रव्यपूजाकरणानन्तरं नादपूजारूपा घण्टा वाद्यत इति पूजाकारकवृद्धश्राद्धपरम्परा वर्तते, तेन पूजाकरणे पुष्पादिरूपद्रव्यपूजाकरणानन्तरं घण्टा वाद्यते, चैत्यवन्दनमात्रकरणे तु अक्षतादिमोचनरूपद्रव्य-पूजाकरणानन्तरं घण्टा वाद्यत इति ज्ञायते, अन्यथा घण्टावादनं तु हर्षप्रकर्षसूचकलोकप्रवाहपतितं, न तु परम्परानुसारीति ॥ ४२९ ॥

## अथ पण्डितविद्याविजयगणिकृतप्रश्नास्तदुत्तराणि च ।

यथा—उद्घाटितमुखमस्तने ईर्यापथिकी समायाति वन्दनकदानावसरे तु कथं नायाति इति प्रश्नोऽत्रोत्तरं—वन्दनकदानावसरे विधि-सत्यापनार्थमुद्घाटितमुखस्यापि मस्तके प्रमार्जनाभावादैर्यापथिकी समायातीति ध्येयम् ॥ ४३० ॥

तथा—श्राद्धा मण्डल्यां प्रतिक्रमणं कुर्वन्ति तत्कथित प्रतिक्रमणसूत्र आह्वानं स्तवनादिकं यतीनां च शुद्ध्यति न वा ? तथा औप-
कन्याश्रितस्यास्थाने ये म्लेच्छपानीयं पिबन्ति तेषामुपवासादिकं कार्यते न वा इति प्रश्नोऽत्रोत्तर—द्रव्यक्षेत्रकालभावानुसारेण प्रश्नोत्तरमनु-
सन्धेया इति ॥ ४११ ॥
तथा—प्रासुकपानीयस्य संसारकः कचकपानीये मुच्यते किंवा पृथक् रक्ष्यते इति प्रश्नोऽत्रोत्तर—प्रासुकपानीयस्य संसारक एकान्तेन
सचित्तपानीये न क्षिप्यते इत्यक्षराणि शास्त्रे न ज्ञातानि, ततो यथा यतना भवति तथा कर्त्तव्य, परं यथा तथा संसारको न क्षिप्यत इति ॥ ४२२ ॥
तथा—साधु सांवत्सरिकक्षामणार्थं नदीमुत्तीर्य याति न वा इति प्रश्नोऽत्रोत्तर—नदीमुत्तीर्य यतीनां क्षामणार्थं गमनप्रवृत्तिर्ज्ञाता
नास्तीति ॥ ४२३ ॥
तथा—देवलोके राजप्रश्नीयमध्ये वनखण्डवृक्षफलपुष्पादिकं कथितमस्ति तत्पृथ्वीपरिणामरूपं वनस्पतिपरिणामरूपं वा ? , तथा पुष्करणी-
प्रमुखवापीषु मत्स्या कथितास्ते जीवपरिणामरूपा आकारमात्रं वा इति प्रश्नोऽत्रोत्तर—देवलोकेषु वनखण्डवृक्षफलपुष्पादिकं कथितमस्ति तद्वन-
स्पतिरूपं पृथ्वीपरिणामरूपं वाऽस्ति, यद्यपि तत्र पृथ्वी रत्नरूपाऽस्ति तथाऽपीदृशी मृदुरूपास्ति यथा वनस्पतीनामुद्गमने काप्यबाधा न भवेत्,
तथा पुष्करणीप्रभृतिषु ये मत्स्यादय कथितास्तेऽपि पृथ्वीपरिणामरूपा आकारमात्रास्सम्भाव्यन्ते, यतो देवलोकवापीषु मत्स्यादिजलचरजीवनिषेध-
गाथा दृश्यन्त इति ॥ ४२४ ॥
तथा—उपधानतपसि पूर्णे जाते दोषप्रवेशनेषु दिनवृद्धिर्भवति न वा इति, प्रश्नोऽत्रोत्तरं—उपधानदोषप्रवेशनेषु दिनवृद्धिर्भवतीति ॥ ४२५ ॥
तथा—सम्पूर्णदिवसे देशावकाशिकं क्रियते तत्रोच्चारप्रस्रवणविधिर्विधेयनीय, तथा तत्र सामायिकं गृहीतं पारितं च शुद्ध्यति न वा ?

तथा—आरात्रिकनैवेद्यादिढौकनविषय कस्मिन् पुरातनग्रन्थे सन्तीति प्रश्नोऽत्रोत्तरं—प्रवचनसारोद्धारवृत्तिश्राद्धविधिप्रमुखग्रन्थेषु पूजावसरे आरात्रिकोत्तारनैवेद्यढौकनादिविषय प्रतिपादितास्सन्तीति ॥ ४३७ ॥

तथा—समवसरणस्थस्य तीर्थङ्करस्य श्राद्धा यतयश्च कथं वन्दन्ते इति प्रश्नोऽत्रोत्तरं—समवसरणस्थस्य तीर्थकृत श्राद्धा यतयश्च वन्दित्वा यथास्थाने निषिदन्तीति हारिभद्र्यां, परं तद्वन्दनरीति क्वापि लिखिता नास्ति, तस्मादाधुनिकवन्दनरीतिरेव सम्मान्यत इति ॥ ४३८ ॥

तथा—दिगम्बरादिप्रासादे आत्मीयाचार्यप्रतिष्ठितप्रतिमाऽस्ति सा वन्द्यते न वा इति प्रश्नोऽत्रोत्तरं—स एकान्ते वन्द्यते, परं तत्समुदायमध्ये वन्दनं कुर्वतस्तन्मतस्थिरीकरणं यथा न भवति तथा करोति द्रव्यक्षेत्रकालभाविक विचार्य इति ॥ ४३९ ॥

तथा—अष्टविंशतिदिनोपधाने पञ्चत्रिंशद्दिनोपधाने च मूलविधिना उह्यमाने कति दिनानि भवन्ति, तथा तदुपधानद्वयात्कतिदिनेषु न्यूनेषूत्तार्यते इति प्रश्नोऽत्रोत्तरं—मूलविधिना तदुद्वये उह्यमाने दिनन्यूनाधिक्य ज्ञात नास्ति, तथा तदुपधाने न्यूनदिनेषु महत्कारणे सम्पूर्ण तपसि जाते उत्तारयन्तो दृश्यन्ते, परं दिनसङ्ख्या ज्ञाता नास्तीति ॥ ४४० ॥

तथा—तीर्थे यच्छ्रीफलादिद्रव्य मानित तदेव मुच्यतेऽन्यद्वा इति प्रश्नोऽत्रोत्तरं—शङ्खेश्वरादितीर्थे मूलविधिना यदेव मानितमभूत् तदेव मुच्यते, कारणे तु यथा देय न भवति तथा कर्त्तव्यमिति ॥ ४४१ ॥

तथा—'भीवंतसामिपडिमाइ, सासणं विअरिऊण भत्तीए' इत्यत्रार्यायां शासनशब्देन ग्रामोऽथवाऽन्योऽर्थ, तथाऽयमर्थ केषु मौलेषु ग्रन्थेषु वाऽस्तीति सम्यक् प्रसाद्य इति प्रश्नोऽत्रोत्तर—अनेकार्थसूत्रवृत्तौ शासनशब्दस्यार्थपञ्चकं व्याख्यातं, तत्रैकोऽर्थो राजदेयभूमिलक्षणो ग्रामस्यापि

तथा—उपाश्रये सांवत्सरिकादिप्रतिक्रमणावसरे यद् गुरुगुणवेलादि मान्यते तद्देवद्रव्ये साधारणद्रव्ये वा समायाति इति, प्रश्नोऽत्रोत्तरं—यंपाप्रतिष्ठं देवद्रव्ये साधारणद्रव्ये वा तत्समायातीत्यवसेयम् ॥ ४११ ॥

तथा—पौषधमध्ये यावकादेर्दानं दातुं कल्पते न वा इति प्रश्नोऽत्रोत्तरं—मुख्यवृत्त्या पौषधमध्ये यावकादेर्दानं दातुं न कल्पते, कस्मिंश्चित्कारणविशेषे तथा जिनशासनोन्नतिं ज्ञात्वा कदाचिदपि ददाति तदा निषेधो ज्ञातो नास्तीति ॥ ४१२ ॥

तथा—चतुर्मासकानन्तरं मासद्वयं यावद्वस्त्रादिकं विहर्तुं न कल्पते तदक्षराणि कुत्र सन्तीति प्रश्नोऽत्रोत्तरं—पर्युषणे यत्र क्षेत्रे चतुर्मासकं स्थितं तत्पूर्वोऽपि तत्रान्यत्रापि च संनिकृष्टक्षेत्रे सक्रोशयोजनप्रमाणे कारणं विना मासद्वयान्तर्वस्त्रादिग्रहणं न कल्पते, एतदपि विस्तरतो निशीथदशमोद्देशकचूर्णितो निर्णेयं, एतदक्षरानुसारेण साधूनां चतुर्मासकान्ते मासद्वय यावद्वस्त्रादि विहर्तुं न कल्पते ॥ ४१३ ॥

तथा—साधुर्यते 'पिण्डकं' ददाति न वा इति प्रश्नोऽत्रोत्तरं—यो भिक्षुर्गृहस्थस्यैक पिण्डकं ददाति ददतं वा अनुमोदयति तस्य दोषः, यः कारणे त्रयाणां पिण्डकानां परतश्चतुर्थं पिण्डकं ददाति तस्य प्रायश्चित्तं इति निशीथसूत्रप्रथमोद्देशके, एतदनुसारेण साधुना पिण्डदानं न कल्पते इति ॥ ४१४ ॥

तथा—प्रतिक्रमणमध्ये मुखवस्त्रिकया प्रतिलिख्यमानाया पञ्चेन्द्रियच्छिन्दनं भवति तदा तयैव सत्स्पृत पुनः सा प्रतिलेखिता मुच्यते वा इति प्रश्नोऽत्रोत्तरं—पञ्चेन्द्रियच्छिन्दनेऽपि तयैव मुखवस्त्रिकया सरति, विशेषाक्षरानुपलम्भादिति ज्ञायते ॥ ४१५ ॥

## अथ पण्डितधीरकुशलगणिकृतप्रश्नास्तदुत्तराणि च ।

तथा—द्वादशे देवलोके शीतामीष शीतेन्द्रो भासः, तेन शीतेन्द्र इति तदभिधा सत्याऽसत्या वा इति प्रश्नोऽत्रोत्तरं—अच्युतेन्द्र इत्ये-वाभिधा सत्येति ॥ ४१६ ॥

दाराधनापताकाप्रकीर्णकसम्बन्धि गाथात्रयमस्ति, तन्मध्ये यति १ देशविरतिश्रावक २ अविरतसम्यग्दृष्टि ३ जिनशासनसम्बन्धि विनाऽन्येषां कथितास्सन्तीति ॥ ४४१ ॥

दाक्षिण्यदयालुत्वादिकं प्रशस्यतयोक्तं, ततोऽयुक्तं ज्ञातं नास्ति, यत एते गुणा श्रीजिनैरानेतव्या एव

तथा—साधुना भावपूजा कथिताऽस्ति, प्रतिष्ठादावञ्जनशलाकाकरणे तु द्रव्यपूजा जायते तत्कथमिति प्रश्नोऽत्रोत्तर—साधुना बाहुल्येन भावपूजा श्राद्धाना च बाहुल्येन द्रव्यपूजा कथिताऽस्ति, परमत्रैकान्तो ज्ञातो नास्ति, यत—श्रीस्थानाङ्गसूत्रे 'चूए नामेगे पूजावेइ' इति चतुर्भङ्गिकाऽस्ति, एतस्या अर्थकरणे यतीनामेकान्तद्रव्यपूजानिषेधो ज्ञातो नास्ति, यतोऽङ्गरागेण यतिपतीनां पूजा क्रियते, सापि द्रव्यपूजा भवतीति ॥ ४४६ ॥

तथा—नेमिनाथस्यैकादश गणधरा एकविंशतिस्थानके कथिता, कल्पसूत्रे तु अष्टादश तत्कथमिति प्रश्नोऽत्रोत्तर—तावन्त एवैकविंशतिस्थानके तथा सप्ततिशतस्थानकप्रवचनसारोद्धारावश्यकादिग्रन्थेषु च कथिता सन्ति, कल्पसूत्रे तु नेमिनाथस्याष्टादश गणधरा इत्यादि यदन्तरं पतति तन्मतान्तरं ज्ञेयमिति ॥ ४४७ ॥

तथा—नववासुदेवानां शरीरमपि सदृशं न्यूनाधिकं वा इति प्रश्नोऽत्रोत्तर—अवसर्पिणीकालानुभावेन तेषां शरीरबलं न्यूनाधिकमपि भवति, यत प्रथमवासुदेवेन कोटिशिला छत्रस्थानीया कृता, नवमवासुदेवेन भूमितस्तु सा चतुरङ्गुलानि यावदुत्पादिताऽस्तीति ॥ ४४८ ॥

तथा—कार्त्तिकामावास्यारात्रौ 'श्रीमहावीरसर्वज्ञाय नम' इति गण्यते तत्किमर्थं?, कस्मिन् दिने च ज्ञानमुत्पन्नमिति प्रश्नोऽत्रोत्तर—श्रीमहावीरेण सर्वज्ञत्वेन देशना दत्ता तेन 'श्रीमहावीरसर्वज्ञाय नम' इति गण्यते, तन्मध्यरात्रे तु मुक्तिं गतस्तेन 'श्रीमहावीरपारंगताय नम' इति गण्यते ॥ ४४९ ॥

रामदेयमुख्यैकदेशस्तेन 'नीर्थंतसामिपडिमाइ' इत्यत्र शासनशब्देन ग्राम उच्यते, तत्संवादकोऽर्थो दानकृत्यशब्दार्थे व्याख्यातोऽस्ति, तथाऽयमर्थः सविस्तरः हरिभद्रसूरिकृतावश्यकवृत्त्यादिषु कथितोऽस्तीति ॥ ४४१ ॥

## अथ पण्डितसोमविमलगणिकृतप्रश्नस्तदुत्तरं च ।

यथा—तीर्थकृतां जन्मभवनानन्तरं देवा कियत्प्रमाणां रत्नादिवृष्टिं कुर्वन्तीति प्रश्नोऽत्रोत्तरं—' उसभे णं अरहा कोसलिए जाए जाव सिद्ध, ततो वेसमणो सक्कवयणेणं बत्तीसं हिरण्णकोडीओ बत्तीसं सुवण्णकोडीओ बत्तीसं नंदासणाइं बत्तीसं भद्दासणाइं भगवतो तित्थकरस्स जम्मण भवणंमि साहरइ ' इत्यावश्यकवृहद्वृत्ति ७१ पत्रे एतदनुसारेण तथा—" कुण्डलं क्षोमयुग्मं चोच्छीर्षे मुक्त्वा हरिर्न्यधात् । श्रीदामरत्नदामाढ्यमुल्लोचे स्वर्णकन्दुकम् ॥ ४१ ॥ द्वात्रिंशद्रत्नरैरूप्यकोटिवृष्टिं विरच्य स । घोषयामासेति सुरैराभियोगिकैः ॥ ४२ ॥ " इति कल्पकिरणावल्यनुसारेण च तीर्थकृतां जन्मभवनानन्तरं देवविहिता वृष्टि द्वात्रिंशद्धिरण्यकोटिप्रमाणा भवतीति ॥ ४४२ ॥

## अथ गणिहेमसागरकृतप्रश्नास्तदुत्तराणि च ।

यथा—सप्तमकर्मोपाधिकेन यथा साधूनां परमार्थं वृत्तं सदा तस्य सम्यक्त्वमस्ति ? विना सम्यक्त्वं कथं तपाविधबहुकर्मक्षयप्राप्तिरिति, प्रश्नोऽत्रोत्तरं—तपाविधसुखप्राप्तिस्तु भद्रकपरिणामविशेषमाहात्म्यादित्यवधेयम् ॥ ४४४ ॥

तथा—' दक्खिन्नदयाकुलं, पियभासित्ताइ विविहगुणनिवहं ॥ सिवमग्गकारण जं, तमहं अणुमोअए सव्वं ॥ १ ॥ सेसाणं जीवाणं० २ ॥ एमाइ अण्णंपि म० ३ ॥ " एतदाराधनापताकागाथात्रयानुसारेण मिथ्यादृष्टीनां दाक्षिण्यदयालुत्वादिकं प्रशस्यते न वा इति प्रश्नोऽत्रोत्तरं—एत-

कल्पते न वा इति प्रश्नोऽत्रोत्तरं—यदि प्रत्याख्यान-

तथा—येन दीक्षाग्रहणार्थं नीलवणिप्रत्याख्यानं कृतं भवति तस्य दीक्षाग्रहणानन्तर
करण एव कथितं भवति यद्दीक्षाग्रहणानन्तरं नीलवणि कल्पते तदा कल्पते, नान्यथेति ॥ ४९१ ॥

तथा—मधुतरे दुग्धे दध्नि वा यत्राल्पतरान् तन्दुलान् प्रक्षिपति तद्दुग्धं तद्दधि वा निर्विकृतिकं भवति न वा इति प्रश्नोऽत्रोत्तरं—' दक्ख
महु अप्पतंदुले' ति भाष्यगाथावचनादल्पतन्दुलप्रक्षेपेऽपि तद्दुग्धं तद्दध्यपि निर्विकृतिकं भवतीति ज्ञायत इति ॥ ४९६ ॥

## अथ गणिप्रेमविजयकृतप्रश्नास्तदुत्तराणि च ।

यथा—निरन्तरं महतो जीवा मुक्तौ यान्ति परं मुक्तौ सङ्कीर्णं न जायते संसारश्च रिक्तो न भवति तस्य को दृष्टान्त इति
प्रश्नोऽत्रोत्तर—यथा भूमिकामृत्तिका मेघजलप्रेरिता समुद्रमध्ये निरन्तर याति तथाऽपि समुद्र पूर्णो न भवति भूमिकायां च गर्त्ता न भवति तथा
मुक्तावप्ययमेव दृष्टान्तो ज्ञेय इति ॥ ४९७ ॥

तथा—कण्डरीक सहस्रवर्ष चारित्र प्रपाल्य एकदिनं विषयसुखं भुक्त्वा नरके गत तच्चारित्रपालनफलं अग्रे उदयं समेष्यति न वा इति
प्रश्नोऽत्रोत्तर—तत्फलविपाकानुभवे नियमो नास्ति, अत्रापि च विशेषो दृष्टो नास्ति ॥ ४९८ ॥

तथा—चक्षुर्विकल्पे ब्रह्मदत्तचक्री रात्रौ द्विनवतिसहस्राधिकलक्षरूपाणि करोति तानि किं चक्षुर्विकल्पानि स्वाभाविकानि वा इति प्रश्नोऽत्रोत्तरं—
ब्रह्मदत्तचक्री यानि रूपाणि विकुर्वति तानि प्रायश्चक्षुर्विकल्पानीति ॥ ४९९ ॥

तथा—नवमवासुदेवो द्वारिकायां भवत्यन्यनगरे वा इति प्रश्नोऽत्रोत्तरं—अवसर्पिण्या नवमवासुदेवो द्वारिकानगर्यां भवतीति शास्त्रानु-
सारेण ज्ञायते, वृद्धप्रसिद्धिरप्येवमेवास्तीति ॥ ४९० ॥

तथा—निर्वाणावसरे श्रीवीरेण षोडश प्रहरान् यावद्देशना दत्ता, सा कस्माद्दिनादारभ्य कस्मिन् दिने पूर्णा जाता इति प्रश्नोऽत्रोत्तरं—चतुर्दशीदिनेऽर्द्धरात्र्यामावास्याया पाश्चात्यघटिकाद्वयरात्रौ देशना पूर्णा जाता सम्भाव्यते, यतोऽमावास्यायामेकोनत्रिंशे मुहूर्त्ते निर्वाणं कथितमस्ति, षोडश प्रहरास्तु ततोऽर्वाग् जाता युज्यन्त इति ॥ ४९० ॥

## अथ गणिरङ्गवर्द्धनकृतप्रश्नास्तदुत्तराणि च।

यथा—श्रावकस्य निर्विकृतिकप्रत्याख्याने यतिभिर्विकृतिकं कल्पते न वा इति प्रश्नोऽत्रोत्तर—यतीनां श्रावकाणा च मुख्यवृत्त्या निर्विकृतिकं न कल्पते, कारणे तु कल्पते, एवंविधान्यक्षराणि शास्त्रे सन्ति, तस्मात् श्राद्धः कदाचिन्निर्विकृतिकप्रत्याख्यान करोति तस्य न कल्पते, गाढतपसि तु कल्पते, कारणत्वाद् एकान्तेन निषेधो ज्ञातो नास्ति, यतीनां तु पर्व्वादिषु पुन पुनस्तत्प्रत्याख्यानकरणात्कल्पत इति ॥ ४९१ ॥

तथा—पौषधं कर्त्तुकामस्योपवासं कर्त्तुकामस्य च रात्रौ सुखभक्षिकाभक्षण कल्पते न वा इति प्रश्नोऽत्रोत्तर—पौषधोपवास कर्त्तुकामस्य श्राद्धस्य मुख्यवृत्त्या रात्रौ सुखभक्षिकाभक्षणं न कल्पते, यस्य तु सर्व्वथा तद्विना न चलति स प्रथमरात्रिप्रहरद्वय यावत्कदाचित्सुखभक्षिकां भक्षयति तदा पौषधस्योपवासस्य वा भङ्गो न भवति, यदि तु तस्मादनन्तरं भक्षयति तदा भङ्गो भवतीति ॥ ४९२ ॥

तथा—पुस्तकक्षेपकरणादिकं परिग्रहमध्ये समायाति न वा इति प्रश्नोऽत्रोत्तरं—यदि मूर्च्छा भवति तदा परिग्रह एव अन्यथा तु न इति तत्त्वम् ॥ ४९३ ॥

तथा—स्थापना कियत्कालं तिष्ठतीति प्रश्नोऽत्रोत्तरं—स्थापना शास्त्रे द्विप्रकारा कथितास्ति—इत्वरा यावत्कथिका च, तत्र यावदुपयोगो भवति तावदित्वरा, यावद्वस्तुविनाशो न भवति तावद्यावत्कथिका भवतीति ॥ ४९४ ॥

तथा—येन दीक्षाग्रहणार्थं नीलवणिप्रत्याख्यानं कृतं भवति तस्य दीक्षाग्रहणानन्तरं कल्पते न वा इति प्रश्नोऽत्रोत्तरं—यदि प्रत्याख्यानकरण एव कथितं भवति यद्दीक्षाग्रहणानन्तरं नीलवणि कल्पते तदा कल्पते, नान्यथेति ॥ ४११ ॥

तथा—बहुतरे दुग्धे दध्नि वा यत्राल्पतरान् तन्दुलान् प्रक्षिपति तद्दुग्धं सदधि वा निर्विकृतिकं भवति न वा इति प्रश्नोऽत्रोत्तरं—'दक्ख बहु अप्पतंदुले' ति भाष्यगाथावचनादल्पतन्दुलप्रक्षेपेऽपि तद्दुग्धं तद्दध्यपि निर्विकृतिकं भवतीति ज्ञायत इति ॥ ४१६ ॥

## अथ गणिप्रेमविजयकृतप्रश्नास्तदुत्तराणि च ।

यथा—निरन्तरं बहवो जीवा मुक्तौ यान्ति परं मुक्तौ सङ्कीर्णं न जायते संसारश्च रिक्तो न भवति तत्र को दृष्टान्त इति प्रश्नोऽत्रोत्तरं—यथा भूमिकामृत्तिका मेघजलप्रेरिता समुद्रमध्ये निरन्तरं याति तथाऽपि समुद्रः पूर्णो न भवति भूमिकायां च गर्त्ता न भवति तथा मुक्तावप्ययमेव दृष्टान्तो ज्ञेय इति ॥ ४१७ ॥

तथा—कण्डरीक सहस्रवर्षं चारित्रं प्रपाल्य एकदिनं विषयसुखं भुक्त्वा नरके गतः तच्चारित्रपालनफलं अग्रे उदयं समेष्यति न वा इति प्रश्नोऽत्रोत्तरं—तत्फलविपाकानुभवे नियमो नास्ति, अत्रापि च विशेषो दृष्टो नास्ति ॥ ४१८ ॥

तथा—चक्षुर्विकलो ब्रह्मदत्तचक्री रात्रौ द्विनवतिसहस्राधिकलक्षरूपाणि करोति तानि किं चक्षुर्विकलानि स्वाभाविकानि वा इति प्रश्नोऽत्रोत्तरं—ब्रह्मदत्तचक्री यानि रूपाणि विकुर्वति तानि प्रायश्चक्षुर्विकलानीति ॥ ४१९ ॥

तथा—नवमवासुदेवो द्वारिकायां भवत्यन्यनगरे वा इति प्रश्नोऽत्रोत्तरं—अवसर्पिण्यां नवमवासुदेवो द्वारिकानगर्यां भवतीति शास्त्रानुसारेण ज्ञायते, मूढप्रसिद्धिरप्येवमेवास्तीति ॥ ४२० ॥

तथा—कश्चिदभिमानेनान्यस्पर्धया वा सत्त्वशमेव पूजां करोति तस्य किं फलं भवतीति प्रश्नोऽत्रोत्तरं—मुख्यवृत्त्याऽभिमानादिकं विना केवलवीतरागभक्त्या पूजा क्रियते, यदि कश्चिदभिमानादिना पूजां करोति तदा तस्य न तथाविध फलमिति ॥ ४११ ॥

तथा—सद्गृहस्थे परिणीयमानस्तस्याः शीलखण्डनं स्यात्तदा तस्याः सतीत्वं याति तिष्ठति वा इति प्रश्नोऽत्रोत्तरं—बलात्कारेण शीलखण्डनायां द्रव्यतः सतीत्वं याति, न तु भावत इत्येके, अपरे त्वाहुः—द्रव्यतः सतीत्वातिक्रमेऽपि न सत्त्वातिक्रम इति सर्वैकान्तिकत्वाद्विपर्ययभिदुनधर्मानुसारेणोच्यते ॥ ४१२ ॥

तथा—क्रमक्रमप्रायेण तीर्थकृन्नामकर्म बद्धं सत् केन दोषेण निष्फलीकृतमिति प्रश्नोऽत्रोत्तरं—भरतस्य तीर्थकृते ब्राह्मे शिशिरे प्रश्ने कृते मरीचेस्तस्य प्रशस्तत्वनिरूपणलक्षणप्रभावेन तन्निष्फलीकृतमिति प्रसिद्धिः ॥ ४१३ ॥

तथा—नमस्कारस्य श्रीशत्रुञ्जयनाम्नश्च गणने अधिकक्रमः कुत्रास्तीति प्रश्नोऽत्रोत्तरं—यस्य यद्गणने चित्तोल्लासोऽपेक्षया भवति तस्य तद्गणनेऽधिकक्रमोऽस्ति, परं द्वयोर्महिम्न पारो नास्तीति ॥ ४१४ ॥

तथा—महावीरेण कर्म्मेशासकाकर्णणे कथमाकल्पः कृत अनन्तबलत्वादिति प्रश्नोऽत्रोत्तरं—अनन्तबलत्वं भगवतां क्षायिकवीर्यलाभस्वेनोक्तं 'अपरिमियबलसत्त्व जिणवरिंदा' इत्यत्र तथा व्याख्यानात्, तत प्रबलनिकाचितकर्मणां आकर्षसम्भवेऽपि न किमप्यनुपपन्नमिति ॥ ४१५ ॥

## अथ पण्डितनाकर्षिंगणिशिष्यगणिहर्षविजयकृतप्रश्नास्तदुत्तराणि च ।

यथा—षण्मासस्योपरि देवशय्या रिक्ता न भवति तर्हि नलिनीगुल्मविमाने आर्यसुहस्तिसूरीन् अवन्तिसुकुमालेन कथमुत्पन्न इति प्रश्नोऽत्रोत्तरं—विमानं तदेव कथितमस्ति परं शय्या सैव कथिता नास्ति तस्मात्किमप्यघटमानं नास्तीति ॥ ४१६ ॥

तथा—कुलकोटिमध्ये एककुलस्य कियन्त पुरुषाः सन्ति ? उत्तममध्यमजघन्यभेदमानश्च कियन्त इति प्रश्नोऽत्रोत्तरं—अष्टाधिकशत पुरुषा एककुलमध्ये भवन्तीति प्रसिद्धिरस्ति, परमुत्तममध्यमजघन्यभेदा ज्ञाता न सन्ति, तथा एतस्य व्यक्ताक्षराणि शास्त्रे न दृष्टानीति ॥ ४६७ ॥

तथा—विशालानगर्यां श्रीमुनिसुव्रतस्वामिस्तूपपातककूलवालको भव्योऽभव्यो वा इति प्रश्नोऽत्रोत्तरं—अस्यां चतुर्थीशतौ सप्ताभव्याः कथिताः सन्ति, तस्माद्भव्यः सम्भाव्यते, परं व्यवहारतो महाकर्मा निश्चयतस्तु केवली जानातीति ॥ ४६८ ॥

तथा—गोप्रभृतिजीवमोचनाय द्रव्यलिङ्गिनां द्रव्य ग्रहीतुं कल्पते न वा इति प्रश्नोऽत्रोत्तरं—ज्ञानादिसम्बन्धि द्रव्य न भवति तदा गृह्यते निषेधो ज्ञातो नास्तीति ॥ ४६९ ॥

तथा—यवनचीवरादय आद्रा जातास्तेषां तीर्थकृत्प्रतिमापूजने क्षमो न वा इति प्रश्नोऽत्रोत्तरं—यदि शरीरस्य तथा वस्त्रादीनां च पावित्र्यं स्यात्तदा निषेधो ज्ञातो नास्ति, परं तेषां प्रतिमापूजने क्षम एव ज्ञातोऽस्तीति ॥ ४७० ॥

तथा—शिष्यस्तादृक् चारित्रं न पालयति तद्दूषणं गुरोर्लगति न वा इति प्रश्नोऽत्रोत्तरं—यदि गुरुर्मोहेन न निवारयति तदा गुरोः पातक लगति, अन्यथा तु न इति ॥ ४७१ ॥

तथा—सर्वे संसारिणो जीवाः परलोकं गमन्तः सिद्धशिलां स्पृशन्ति न वा इति प्रश्नोऽत्रोत्तरं—सर्वजीवानां सिद्धशिलास्पर्शेन ज्ञातं नास्ति, यतः शास्त्रे द्विविधा गतिः प्रोक्ताऽस्ति, एका ऋजुर्द्वितीया विग्रहगति, तत्र ऋजुगति —सरलगतिर्विग्रहगति —वक्रगतिरिति ॥ ४७२ ॥

तथा—चक्रवर्त्तिनस्तिमिश्रागुहाद्वारोद्घाटने ज्वाला निसरन्ति न वा ? यदि न तर्हि कूणिकस्य कथं निस्ससारेति प्रश्नोऽत्रोत्तरं—जम्बूद्वीपप्रज्ञप्त्यादिपुस्तकमस्ति चक्रवर्त्तिन सेनानी नरो द्वारमुद्घाटयति ज्वाला च न निस्सरति, कूणिकस्य तु द्वाराणि नोद्घाटितानि, तर्हि ज्वाला कुतो

